

## ग्रन्थप्राप्तिस्थानम्ः

१–शाह लालचन्द नंदलाल वकील
ठि० रावपुरा, महाजनगली. वडोदरा.
श्री मुक्तिकमलजैनमोहनज्ञानमन्दिर.

२–मास्तर कुंवरजी दामजी
ठि० बुद्धिसिंहजी जैन पाठशाला.
पालीताणा. [ काठीयावाड ]

मुद्रक —शाह गुलावचद लल्लुभाइ, श्री महोदय प्रीन्टींग प्रेस, दाणापीठ–भावनगर ...

# “ संपादकीय निवेदन ”

आजथी लगभग पंदर वर्ष अगाउ **श्रीमती मुक्तिकमल जैन मोहनमाळा–वडोदरा** तरफथी आ विपाकसूत्र–सटीकनुं छाया साथे प्रकाशन थयु हतुं. साधु समाजमां आ सूत्रनुं पठन–पाठन विशेष उपयुक्त होइ अल्प समयमां प्रथमावृत्ति खलास थतां केटलाय समयथी आ पुस्तकनी मांगणीओ जिज्ञासु वर्ग तरफथी संख्याबंध प्रमाणमां चालु हती. परिणामे द्वितीयावृत्ति छपाववानो प्रारंभ थयो. अनेक प्राचीन प्रतोना पाठ मेळवीने–पू. परमोपकारी आचार्य महाराज श्रीमान् **विजयप्रतापसूरीश्वरजी** महाराजश्रीए पुस्तक प्रुफादिकनुं संशोधन करी अमारा कार्यने सुलभ बनाव्यु. पुस्तक तैयार थतां आजे जिज्ञासुओनी मागणीओ पूर्ण करवा अमो शक्तिशाळी थया छीए ते माटे आनंद थाय ते सहज छे.

प्रत्येक पृष्ठमां जेटलुं मूलसूत्र, तेटलीज टीका, तेटलीज लगभग छाया आ प्रमाणे व्यवस्थित मुद्रण माटे तथा प्रुफ संशोधन माटे योग्य ख्याल आपवामां आव्यो छे छतां पाठको सूत्रनी साथे टीका तथा छायानो संबंध मेळवी लेवा ख्याल राखशे. तेमज छद्मस्थ सुलभ प्रमाद जन्य कांइपण स्खलना जणाय तो सहृदयभावे अमने जणावशे अने सूत्रनुं विधिपूर्वक पठन–पाठन करी आत्मकल्याणमां उजमाळ बनशे एटले अमारो परिश्रम अमो सार्थक गणीशुं.

निवेदक :—**मोहनप्रतापी–नंदचरणोपासक, ‘लालचन्द’**

## "आभार-प्रदर्शन"

पूज्यपाद परमकारुणिक आचार्य महाराज श्रीविजयमोहनसूरीश्वरजी महाराजना पट्टालंकार पू. आचार्य महाराज श्रीविजयप्रतापसूरीश्वरजी महाराजना शिष्य रत्न मुनिप्रवर श्रीमान् माणेकविजयजी महाराजना सदुपदेशथी 'जावाल' निवासी शा. नताजी थानमलजी तथा मडवारीयावाला शा. झवेरचंद कीसनाजी ( हस्ते शा. केशरीमलजी पन्नाजी ) तरफथी आ ग्रंथ छपाववामां सम्पूर्ण आर्थिक सहाय आपवानी धन्यवादार्ह उदारता बतावावामा आवी छे ते माटे उपदेशक मुनिश्रीनो तेमज उदार महाशय आर्थिक सहायकनो अमो आभार मानीए छीए.

श्री. मु. क. जैन मोहनमाळा-कार्याधिकारी, शाह लालचंद नंदलाल वकील.

## ॥ अनुक्रमः ॥

पूज्यपाद प्रवचन प्रभावक जैना-
चार्य श्री श्री १००८ श्रीमान्
विजयमोहनसूरीश्वरजी
महाराजना प्रशिष्य मुनिप्रवर
श्रीमान् माणेकविजयजी
महाराज.



जन्म संवत् १९६२
भालक ( ता. वीसनगर )

दीक्षा संवत् १९७९
वडोदरा. ( गुजरात )

श्रीमद्द्वादशाङ्गीविरचयितृश्रीसुधर्मस्वामिभगवत्सूत्रितं नवाङ्गीवृत्तिकारचान्द्रकुलीन–
श्रीमदभयदेवाचार्यविनिर्मितया टीकया छायया च विभूषितं

# श्री विपाकश्रुतम् [ सूत्रम् ]।

तेणं कालेणं तेणं समएणं चंपा णामं णयरी होत्था। वण्णओ। पुण्णभद्दे चेइए[1][2]। वण्णओ। तेणं

टीका–नत्वा श्रीवर्धमानाय वर्धमानश्रुताध्वने। विपाकश्रुतशास्त्रस्य वृत्तिकेयं विधास्यते॥१॥अथ 'विपाकश्रुतम्' इति कः शब्दार्थः? उच्यते, विपाकः पुण्यपापरूपकर्मफलं तत्प्रतिपादनपरं श्रुतमागमो विपाकश्रुतम्। इदं च द्वादशाङ्गस्य प्रवचनपुरुषस्यैकादशमङ्गम्। इह च शिष्टसमयपरिपालनार्थं मङ्गलसंबन्धाभिधेयप्रयोजनानि किल वाच्यानि भवन्ति। तत्र चाधिकृतशास्त्रस्यैव सकल[3]कल्याणकारिसर्ववेदिप्रणीतश्रुतरूपतया भावनन्दीरूपत्वेन मङ्गलरूपत्वान्न ततो भिन्नं मङ्गलमुपदर्शनीयम्। अभिधेयं च शुभाशुभकर्मणां विपाकः, स चास्य नाम्नैवाभिहितः। प्रयोजनमपि श्रोतृगतमनन्तरं कर्मविपाकावगमरूपं नाम्नैवोक्तम्। अस्य यत् किल कर्मविपाकावेदकं श्रुतं

छाया–तस्मिन् काले तस्मिन् समये चम्पा नाम नगर्यभवत्। वर्णकः। पूर्णभद्रं चैत्यम्। वर्णकः। तस्मिन् काले तस्मिन् समये श्रमणस्य

१ कघङच चेतिते, खग चेतिए। २ कखगङच–ए ते०। ३ खग कल्या०।

कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स अंतेवासी अज्जसुहम्मे[1] णामं अणगारे जाईसंपण्णे[2][3]। वण्णओ। चोद्दसपुव्वी[4] चउणाणोवगए[5] पंचहिं अणगारसएहिं सद्धिं संपरिवुडे पुव्वाणुपुव्विं[6] चरमाणे जाव

तत् शृण्वतां प्रायः कर्मविपाकावगमो भवत्येवेति। यत्तु निःश्रेयसावाप्तिरूपं परंपरप्रयोजनमस्य, तदाप्तप्रणीततयैव प्रतीयते। न ह्याप्ता यत् कथंचिद् निःश्रेयसार्थं न भवति तत्प्रणयनायोत्सहन्ते, आप्तत्वहानेरिति। संबन्धोऽप्युपायोपेयभावलक्षणो नाम्नैवास्य प्रतीयते, तथाहि—इदं शास्त्रमुपायः, कर्मविपाकावगमस्तूपेयमिति। यस्तु गुरुपर्वक्रमलक्षणः संबन्धोऽस्य, तत्प्रतिपादनायेदमाह—'ते णं काले णं' इत्यादि। अस्य व्याख्या—'ते णं काले णं' 'ते णं समए णं' ति तस्मिन् काले तस्मिन् समये, णंकारो* वाक्यालंकारार्थत्वात्, एकारस्यं च प्राकृतप्रभवत्वात्। अथ काल-समययोः को विशेषः? उच्यते, सामान्यो वर्तमानावसर्पिणीचतुर्थारकलक्षणः कालः, विशिष्टः पुनस्तदेकदेशभूतः समय इति। अथवा, तेन कालेन हेतुभूतेन, समयेन हेतुभूतेनैव। 'होत्थ'त्ति अभवत्। यद्यपीदानीमप्यस्ति सा नगरी, तथाप्यवसर्पिणी कालस्वभावेन हीयमानत्वाद् वस्तुस्वभावानां, वर्णकग्रन्थोक्तस्वरूपा सुधर्मस्वामिकाले नास्तीति कृत्वाऽतीतनिर्देशः कृतः। 'वण्णउ'त्ति "रिद्धं[10]त्थिमियसमिद्ध—"इत्यादिवर्णकोऽस्य वक्तव्यः। स चौपपातिकवद् द्रष्टव्यः। 'पुंण[11]भद्दे चेइए'त्ति

भगवतो महावीरस्यान्तेवासी आर्यसुधर्मा नामानगारो जातिसपन्नः। वर्णकः। चतुर्दशपूर्वी चतुर्ज्ञानोपगतः पञ्चभिरनगारशतैः सार्धं संपरिवृतः

१ घङ —म्मे जाव। २ खग —जाति। ३ ख —ण्णे केसिव। —ग—ण्णे किसिवण्णव०। ४ क चउद। च —चउदस। ५ खग —गते। ६ कगच —पुव्वीजा —ख—पुव्विं जा। ७ क —नायाह। ८ क —अस्य च। ९ क —स्य प्रा० १० खग —रिद्धि। ११ कखग —पुन्न।

* णकारस्य प्राकृते वाक्यालकारार्थत्वापेक्षया सप्तम्या स्थाने प्राकृतव्याकरणनिष्पन्नायास्तृतीयाया एव व्याख्या श्रेयसी, दृश्यता हे० प्रा० ३-१३७ सूत्रस्य वृत्ति।

जेणेव पुण्णभद्दे चेइए अहापडिरूवं जाव विहरइ। परिसा निग्गया। धम्मं सोच्चा निसम्म जामेव दिसं पाउब्भूया तामेव दिसं पडिगया। तेणं कालेणं तेणं समएणं अज्जसुहम्मस्स अंतेवासी अज्जजंबू

पूर्णभद्राभिधाने चैत्ये व्यन्तरायतने। 'अहापडिरूवं जाव विहरइ'त्ति अनेनेदं सूचितं द्रष्टव्यम्—"अज्जसुहम्मे थेरे अहापडिरूवं उग्गहं उग्गिण्हइ, अहापडिरूवं उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरइ" तत्र येन प्रकारेण प्रतिरूपः साधूचितस्व-रूपो यथाप्रतिरूपोऽतस्तम्, अवग्रहम् आश्रयमिति, विहरति आस्ते। 'जामेव दिसं पाउब्भूया' यस्या दिशः सकाशात् प्रादुर्भूता प्रकटीभूता आगतेत्यर्थः। 'तामेव दिसं पडिगया' तस्यामेव दिशि प्रतिगतेत्यर्थः। 'सत्तुस्सेहे' त्ति सप्तोत्सेधः सप्तहस्तप्रमाण इत्यर्थः। 'जहा गोयमसामी तहा' इति यथा गौतमो भगवत्यां वर्णितस्तथाऽयमिह वर्णनीयः। कियद्दूरं यावदित्याह—'जाव झाणकोट्ठोत्ति' "झाणकोट्ठोवगते" इत्येतत् पदं यावदित्यर्थः। स चायं वर्णकः—"समचउरंससंठाणसंठिए, वज्जरिसहनारायसंघयणे" विशेषणद्वयमपी-दमागमसिद्धम्; "कणगपुलगनिघसपम्हगोरे" कनकस्य सुवर्णस्य यः पुलको लवस्तस्य यो निकषः कषपट्टे रेखालक्षणः, तथा पम्हत्ति पद्मगर्भस्तद्वद् गौरो यः स तथा "उग्गतवे" उग्रमप्रधृष्यं तपो यस्य स तथा; "दित्ततवे" दीप्तं हुताशन इव कर्मवनदाह-

पूर्वानुपूर्व्या चरन् यावद् यत्रैव पूर्णभद्रं चैत्यं यथाप्रतिरूपं यावद् विहरति। परिषद् निर्गता। धर्मं श्रुत्वा निशम्य यस्या एव दिशः प्रादुर्भूता तामेव दिशं प्रतिगता। तस्मिन् काले तस्मिन् समये आर्यसुधर्मणोऽन्तेवासी आर्यजम्बूर्नामानगारः सप्तोत्सेधो यथा, गौतमस्वामी तथा यावद् ध्यान-

१ क –तवेत्ति।

णामं अणगारे सत्तुस्सेहे जहा गोयमसामी तहा, जाव झाणकोट्ठोवगए विहरति। तते णं अज्जजंबू णामं अणगारे जायसड्ढे जाव जेणेव अज्जसुहम्मे अणगारे तेणेव उवागए,तिक्खुत्तो आयाहिणंपयाहिणं करेति,

कोष्ठोपगतः विहरति। तत आर्यजम्बूर्नामानगारो जातश्रद्धो यावद् यत्रैवार्यसुधर्माऽनगारस्तत्रैवोपागतस्त्रिरादक्षिणप्रदक्षिणं करोति, कृत्वा वन्दते,

कत्वेन ज्वलत्तेजस्तत् तपो यस्य स तथा। "तत्ततवे" तप्तं तापितं तपो येन स तथा, एवं हि तेन तत् तपस्तप्तं येन कर्माणि संताप्य तेन तपसा स्वात्मापि तपोरूपः संतापितो यतोऽन्यस्यास्पृश्यमिव जातमिति; "महातवे" प्रशस्ततपा बृहत्तपा वा; "उराले" भीमः, अतिकष्टतपःकारितया पार्श्ववर्तिनामल्पसत्त्वानां भयजनकत्वात्; उदारो वा प्रधान इत्यर्थः, "घोरे" निर्घृणः परीषहाद्यरातिविनाशे; "घोरगुणे" अन्यैर्दुरनुचरगुणः; "घोरतवस्सी" घोरैस्तपोभिस्तपस्वी; "घोरबंभचेरवासी" घोरेऽल्पसत्त्वदुरनुचरत्वेन दारुणे ब्रह्मचर्ये वस्तुं शीलं यस्य स तथा; "उच्छूढसरीरे" उच्छूढं उज्झितमिवोज्झितं शरीरं येन, तत्प्रतिकर्मत्यागात्; "संखित्तविउलतेयलेस्से" संक्षिप्ता शरीरान्तर्वर्तिनीत्वात्, विपुला च विस्तीर्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात् तेजोलेश्या विशिष्टतपोजन्य-लब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा; "उड्ढंजाणू" शुद्धपृथिव्यासनवर्जनात्, औपग्रहिकनिषद्याया अभावाच्च उत्कटुकासनः सन्नुपविश्यते (? विशतीति) ऊर्ध्वे जानुनी यस्य स ऊर्ध्वजानुः; "अहोसिरे" अधोमुखो नोर्ध्वं तिर्यग् वा विक्षिप्तदृष्टिरिति भावः; "झाणकोट्ठोवगए" ध्यानमेव कोष्ठस्तमुपागतो यः स तथा। 'विहरइ' त्ति "संजमेणं तपसा अप्पाणं भावेमाणे विहरइ" इत्येवं दृश्यम्।

१ खगघङ –गोतम। २ कघङच –व ज्झा०। ३ ख नाम। गङच णामे। घ नामे। ४ क –हिण प०।

करेत्ता वंदति, नमंसति वंदित्ता नमंसित्ता जाव पज्जुवासेति। पज्जुवासित्ता एवं वयासी;–[सू० १] 'जति णं भंते! समणेणं भगवया महावीरेण जाव संपत्तेणं दसमस्स अंगस्स पण्हावागरणाणं अयमट्ठे पण्णत्ते, एक्कारसमस्स णं भंते![2] अंगस्स विवागसुयस्स समणेणं जाव संपत्तेणं के अट्ठे पण्णत्ते?' तते णं अज्जसुहम्मे अणगारे जंबू अणगारं एवं वयासी;–'एवं खलु जंबू! समणेणं जाव संपत्तेणं एक्कारसमस्स अंगस्स विवागसुयस्स दो सुयखंधा[3] पण्णत्ता, तं जहा–दुहविवागा[4] य सुहविवागा[5] य[6]। 'जति णं भंते!

'जायसड्ढे' प्रवृत्तविवक्षितार्थश्रवणवाञ्छः; यावत्करणादिदं दृश्यम्–"जायसंसए" प्रवृत्तानिर्धारितार्थप्रत्ययः; "जायकोउहल्ले" प्रवृत्तश्रवणौत्सुक्यः; "उप्पन्नसड्ढे" प्रागभवदुद्भूतश्रवणवाञ्छ उत्पन्नश्रद्धत्वात् प्रवृत्तश्रद्ध इत्येवं हेतुफलभावलक्षणाद् न पुनरुक्तता; एवं "उप्पन्नसंसए, उप्पन्नकोउहल्ले; संजायसड्ढे, संजायसंसए, संजायकोउहल्ले; समुप्पन्नसड्ढे, समुप्पन्नसंसए, समुप्पन्नकोउहल्ले"

नमस्यति, वन्दित्वा नमस्यित्वा यावत्पर्युपास्ते। पर्युपास्यैवमवदत्,–'यदि भदन्त! 'श्रमणेन भगवता महावीरेण यावत्संप्राप्तेन दशमस्याङ्गस्य प्रश्नव्याकरणानामयमर्थः प्रज्ञप्तः, एकादशस्य भदन्त! अङ्गस्य विपाकश्रुतस्य श्रमणेन यावत्सप्राप्तेन कोऽर्थः प्रज्ञप्तः?' तत आर्यसुधर्मोऽनगारो जम्बूमनगारमेवमवदत्,–' एवं खलु जम्बो! श्रमणेन यावत्संप्राप्तेनैकादशस्याङ्गस्य विपाकश्रुतस्य द्वौ श्रुतस्कन्धौ प्रज्ञप्तौ, तद्यथा–दुःखविपा-

१ खगघङच –सति ए०। २ क –ते वि०। ३ खगघ –यक्खंधा। ४ कख –वागो य। ५ स –वागो य। ६ क य पढमस्स।

समणेणं जाव संपत्तेणं एक्कारसमस्स अंगस्स विवागसुयस्स दो सुयक्खंधा पण्णत्ता, तंजहा—दुहविवागा य सुहविवागा य । पढमस्स णं भंते ! सुयखंधस्स दुहविवागाणं समणेणं जाव संपत्तेणं कइ अज्झयणा पण्णत्ता ? ’ तते णं अज्जसुहम्मे अणगारे जंबू अणगारं एवं वयासी;—‘ एवं खलु जंबू ! [2]समणेणं जाव

व्यक्तार्थानि; नवरमेतेषु पदेषु संशब्दः प्रकर्षादिवचनः। अन्ये त्वाहुः—‘जातश्रद्धो जातप्रश्नवाञ्छः, सोऽपि कुतः? यतो जातसंशयः, सोऽपि कुतः? यतो जातकुतूहलः अनेन पदत्रयेणावग्रह उक्तः, एवमन्येन पदानां त्रयेण २ ईहा-ऽवाय-धारणा उक्ता भवन्ति’ इति । ‘तिक्खुत्तो’ त्ति त्रिकृत्वः त्रीन् वारान् । ‘आयाहिण’ त्ति आदक्षिणाद् दक्षिणपार्श्वादारभ्य प्रदक्षिणो दक्षिणपार्श्ववर्ती आदक्षिण-प्रदक्षिणोऽतस्तम् । ‘वंदइ’ त्ति स्तुत्या ‘नमंसइ’ त्ति नमस्यति प्रणामतः, इह यावत्करणादिदं दृश्यम्—“ सुस्सूसमाणे नमंसमाणे विणएणं पंजलिउडे अभिमुहे” इति, व्यक्तं च । ‘दुहविवागा य’ त्ति दुःखविपाकाः पापकर्मफलानि, दुःखानां वा दुःखहेतुत्वात् पापकर्मणां विपाकास्ते यत्राभिधेयतया सन्त्यसौ ‘[3]वरुणानगरम्’ इति न्यायेन दुःखविपाकाः प्रथमश्रुतस्कन्धः । एवं द्वितीयः सुख-विपाकाः । ‘तए णं’ ति ततोऽनन्तरमित्यर्थः ‘मियाउत्ते’ इच्यादिगाथा तत्र मियाउत्तेत्ति मृगापुत्राभिधानराजसुतवक्तव्यताप्रतिब-

काश्च, सुखविपाकाश्च । यदि भदन्त ! श्रमणेन यावत्संप्राप्तेनैकादशस्याङ्गस्य विपाकश्रुतस्य द्वौ श्रुतस्कन्धौ प्रज्ञप्तौ, तद्यथा,—दुःखविपाकाः सुखविपाकाश्च । प्रथमस्य भदन्त ! श्रुतस्कन्धस्य दुःखविपाकानां श्रमणेन यावत्सप्राप्तेन कत्यध्ययनानि प्रज्ञप्तानि ?’ ततः आर्यसुधर्मानगारो

१ च —यराधा । २ क —ण आइगरेणं तित्थगरेण जाव । ३ कग —वरणा ।

संपत्तेणं दुहविवागाणं दस अज्झयणा पण्णत्ता, तं जहा;—

मियाउत्ते[1] १ उज्झियते २ अभग्ग ३ सगडे ४ वहस्सती[2] ५ नंदी ६ ।

उंबर ७ सोरियदत्ते य ८ देवदत्ता य ९ अंजू य १० ॥

द्वमध्ययनं मृगापुत्र एव । एवं सर्वत्र । नवरं 'उज्झियए' त्ति उज्झितको नाम सार्थवाहपुत्रः २ 'अभग्ग' त्ति सूत्रत्वादभग्नसेनो विजयाभिधानचौरसेनापतिपुत्रः ३ 'सगडे' त्ति शकटाभिधानसार्थवाहसुतः ४ 'वहस्सइ' त्ति सूत्रत्वादेव बृहस्पतिदत्तनामा पुरोहितपुत्रः ५ 'नंदी' इति सूत्रत्वादेव नन्दिवर्धनो[3] नन्दीवर्धनो वा राजकुमारः; ६ 'उंबर' त्ति सूत्रत्वादेव उम्बरदत्तो नाम सार्थवाहसुतः ७ 'सोरियदत्ते य' त्ति शौरिकदत्तो नाम मत्स्यबन्धपुत्रः ८ चशब्दः समुच्चये । 'देवदत्ता य' त्ति देवदत्ता नाम गृहपतिसुता ९ चैः[4] समुच्चये । 'अंजू य' त्ति अंजूर्नाम सार्थवाहसुता १० चशब्दः समुच्चये । इति गाथासमासार्थः, विस्तरार्थस्तु यथास्वमध्ययनार्थावगमावगम्य इति । 'एवं खलु' त्ति एवं वक्ष्यमाणप्रकारेण, खलुर्वाक्यालंकारे । 'सव्वोउय० वण्णउ' त्ति सर्वर्तुककुसुमसंछन्ने

जम्बूमनगारमेवमवादीत्,—'एवं खलु जम्बो ! श्रमणेन यावत्संप्राप्तेन दुःखविपाकानां दशाध्ययनानि प्रज्ञप्तानि, तद्यथा,—

मृगापुत्रः १ उज्झितकः २ अभग्नः ३ शकटः ४ बृहस्पतिः ५ नन्दी ६ ।

उम्बरः ७ शौरिकदत्तश्च ८ देवदत्ता च ९ अञ्जूश्च १० ॥

१ क —यापुत्ते । २ क —विहस्सी । ३ ग —नो व० । ४ ख चशब्द ग च स० ।

जति णं भंते ! समणेणं जाव संपत्तेणं दुहविवागाणं दस अज्झयणा पण्णत्ता, तं जहा—मियाउत्ते जाव अंजू य, पढमस्स णं भंते! अज्झयणस्स दुहविवागाणं समणेणं जाव संपत्तेणं के अट्ठे पण्णत्ते?' ततेणं से सुहम्मे अणगारे जंबू अणगारं एवं वयासी;—' एवं खलु जंबू! तेणं कालेणं तेणं समएणं मियं[2]-ग्गामे णामं णगरे होत्था। वण्णओ । तस्स मियग्गामस्स णगरस्स बहिया उत्तरपुरत्थिमे दिसीभाए चंद-णपायवे णामं उज्जाणे होत्था। सव्वोउय० वण्णओ। तत्थ णं सुहम्मस्स जक्खस्स जक्खाययणे होत्था, चिरातीए, जहा पुण्णभद्दे। तत्थ णं मियग्गामे णगरे विजए णामं खत्तिए राया परिवसति । वण्णओ ।

'णंदणवणप्पगासे' इत्याद्युद्यानवर्णको वाच्य इत्यर्थः। 'चिराईए' त्ति चिरादिकं चिरकालीनप्रारम्भमित्यादिवर्णकोपेतं वाच्यं यथा

यदि भदन्त ! श्रमणेन यावत्संप्राप्तेन दु:खविपाकानां दशाध्ययनानि प्रज्ञप्तानि, तद्यथा—मृगापुत्रो यावदञ्जूश्च, प्रथमस्य भदन्त अध्ययनस्य दुःखविपाकानां श्रमणेन यावत्संप्राप्तेन कोऽर्थः प्रज्ञप्तः? ततः स सुधर्मोऽनगारो जम्बूमनगारमेवमवादीत्,—एवं खलु जम्बो! तस्मिन्काले तस्मिन् समये मृगाग्रामो नाम नगरमभूत्। वर्णकः। तस्य मृगाग्रामस्य नगरस्य वहिरुत्तरपौरस्त्ये दिग्भागे चन्दनपादपं नामोद्यानमभवत्, सर्वर्तुक० वर्णकः। तत्र सुधर्मणो यक्षस्य यक्षायतनमभवत्, चिरादिकं, यथा पूर्णभद्रम्। तत्र मृगाग्रामे नगरे विजयो नाम क्षत्रियो राजा

१ क –णं आयगरेण तित्थगरेण जाव। २ क –मे णग०।

तस्स णं विजयस्स खत्तियस्स मिया णामं देवी होत्था, अहीण० वण्णओ। तस्स णं विजयस्स खत्तियस्स पुत्ते मियादेवीए अत्तए मियापुत्ते नामं दारए होत्था जातिअंधे जातिमूए जातिबहिरे जातिपंगुले हुंडे य वायवे। नत्थि णं तस्स दारगस्स हत्था वा पाया वा कण्णा वा अच्छी वा नासा वा। केवलं से तेसिं अंगोवंगाणं आगिई आगितिमित्ते। तते णं सा मियादेवी तं मियापुत्तं दारगं रहस्सियंसि भूमिघरंसि रहस्सितेणं भत्तपाणएणं पडिजागरमाणी विहरति। तत्थ णं मियग्गामे णगरे एगे जातिअंधे पुरिसे

पूर्णभद्रचैत्यमौपपातिके। 'अहीण० वण्णउ' त्ति, अहीनपुण्यपञ्चेन्द्रियशरीर इत्यादिवर्णको वाच्यः। 'अत्तए' त्ति आत्मजः सुतः। 'जाइअंधे' त्ति जात्यन्धो जन्मकालादारभ्यान्ध एव। 'हुंडे य' त्ति हुण्डश्च सर्वावयवप्रमाणविकलः। 'वायवे' त्ति वायुरस्यास्तीति वायवो वातिक इत्यर्थः। 'आगिई आगिइमेत्ते' त्ति अङ्गावयवानामाकृतिराकारः। किंविधेत्याह—आकृतिमात्रमाकारमात्रं नोचित-

परिवसति। वर्णकः। तस्य विजयस्य क्षत्रियस्य मृगा नाम देव्यभवत्, अहीन० वर्णकः। तस्य विजयस्य क्षत्रियस्य पुत्रो मृगादेव्या आत्मजो मृगापुत्रो नाम दारकोऽभवज्जात्यन्धो जातिमूको जातिबधिरो जातिपङ्गुलो हुण्डश्च वायवः। न स्तस्तस्य दारकस्य हस्तौ वा पादौ वा कर्णौ वाऽक्षिणी वा नासा वा। केवलं तस्य तेषामङ्गोपाङ्गानामाकृतिराकृतिमात्रम्। ततः सा मृगादेवी तं मृगापुत्रं दारकं राहसिके भूमिगृहे राहसिकेन भक्तपानकेन प्रतिजागरयन्ती विहरति। तत्र मृगाग्रामे नगर एको जात्यन्धः पुरुषः परिवसति। स एकेन सचक्षुष्केण पुरुषेण पुरतो

१ खगघङच –याते दे०। २ खगघङच ततें। ३ क जाइ। ४ ङच –गिती। ५ क –स्सियेण। ६ क पूर्ण। ७ क गितीमे०।

परिवसति । से णं एगेणं सचक्खुतेणं पुरिसेणं पुरतो दंडएणं पगड्ढिज्जमाणे २ फुट्टहडाहडसीसे मच्छिया-चडगरपहकरेणं अण्णिज्जमाणमग्गे मियग्गामे णगरे गिहे गिहे कालुणवडियाए वित्तिं कप्पेमाणे विहरति। तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जाव समोसरिते। जाव परिसा निग्गया । तते णं से विजये खत्तिए इमीसे कहाए लद्धट्ठे समाणे जहा कूणिए तहा निग्गते जाव पज्जुवासति तते णं से जातिअंधे पुरिसे तं महयाजणसद्दं च जाव सुणेत्ता तं पुरिसं एवं वयासी;–' किण्णं[2] देवाणुप्पिया अज्ज मियग्गामे[3]

स्वरूपेत्यर्थः। 'रहस्सियंसि' ति राहसिके जनेनाविदिते। 'फुट्टहडाहडसीसे' त्ति 'फुट्टं' ति स्फुटितकेशसंचयत्वेन विकीर्णकेशं 'हडाहडं' ति अत्यर्थं शीर्षं शिरो यस्य स तथा। 'मच्छियाचडयरपहकरेणं' ति मक्षिकाणां प्रसिद्धानां चटकैरः प्रधानो विस्तरवान् यः प्रहकरः समूहः स तथा; अथवा, मक्षिकाणां चटकराणां तद्वृन्दानां यः प्रहकरः स तथा तेन । 'अन्निज्जमाणमग्गे' त्ति अन्वीयमानमार्गोऽनुगम्यमानमार्गः । मलाविलं हि वस्तु प्रायो मक्षिकाभिरनुगम्यत एवेति। 'कालुगवडियाए' त्ति कारुण्यवृत्त्या। 'वित्तिं कप्पेमाणे' दण्डेन प्रकृष्यमाणः २ स्फुटितात्यर्थशीर्षो मक्षिकाप्रधानसमूहेनान्वीयमानमार्गो मृगाग्रामे नगरे गृहे गृहे कारुण्यवृत्त्या वृत्तिं कल्पयन् विहरति। तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरो यावत्समवसृतः। यावत् पर्षद् निर्गता । ततः स विजयः क्षत्रियोऽनया कथया लब्धार्थो सन् यथा कूणिकस्तथा निर्गतो यावत्पर्युपास्ते। ततः स जात्यन्धः पुरुषस्तं महाजनशब्दं च यावत् श्रुत्वा त पुरुषमेवमवदत्,–' किं ननु

१ खगघङ्च णिते। २ खगघङच किं न। ३ क मियागा–। ४ कग करप्र । ५ –ख अणिज्ज० । ग अण्णिज्ज ।

इंदमहेति वा जाव निग्गच्छति ?' तते णं से पुरिसे तं जातिअंधपुरिसं एवं वयासी;—'नो खलु देवा० इंदमहे जाव निग्गए; एवं खलु देवाणुप्पिया ! समणे जाव विहराति, तते णं एए जाव निग्गच्छंति'[1]। तते णं से जातिअंधपुरिसे तं पुरिसं एवं वयासी;—'गच्छामो णं देवाणुप्पिया अम्हेवि समणं भगवं जाव पज्जुवासामो'। तते णं से जातिअंधपुरिसे पुरतो दंडएणं पगाड्ढिज्जमाणे २ जेणेव समणे भगवं महावीरे तेणेव उवागंते, उवागच्छित्ता तिक्खुत्तो आयाहिणपयाहिणं[2] करेति, करेत्ता वंदाति नमंसाति, वंदित्ता नमंसित्ता

त्ति जीविकां कुर्वाणः। 'जाव समोसरिए' त्ति इह यावत्करणात् "पुव्वाणुपुव्विं चरमाणे गामाणुगामं दूइज्जमाणे" इत्यादिवर्णको दृश्यः। तं महयाजणसद्दं च' त्ति सूत्रत्वाद् महाजनशब्दं च; इह यावत्करणात् "जणवूहं च जणबोलं च" इत्यादि दृश्यम्। तत्र जनव्यूहश्चक्राद्याकारः समूहः, तस्य शब्दस्तदभेदाज्जनव्यूह एवोच्यते, अतस्तम्; 'बोलः' अव्यक्तवर्णध्वनिरिति। 'इंदमहेइ व' त्ति इन्द्रोत्सवो वा, इह यावत्करणात् "खंदमहे वा रुद्दमहे वा जाव उज्जाणजत्ताइ वा, जन्नं बहवे उग्गा भोगा जाव एगदिसिं एगाभिमुहा" इति दृश्यम्। इतो यद् वाक्यं तदेवमनुसर्तव्यम्, सूत्रपुस्तके हि सूचाक्षराण्येव सन्तीति;—" तए णं से पुरिसे तं जाइअंधपुरिसं एवं

देवानुप्रिय! अद्य मृगाग्रामे इन्द्रमहो वा यावन्निर्गच्छति ? ततः स पुरुषस्तं जात्यन्धपुरुषमेवमवदत्,—'नो खलु देवा० इन्द्रमहो यावन्निर्गतः. एवं खलु देवानुप्रिय ! श्रमणो यावद् विहरति, तत एते यावन्निर्गच्छन्ति'। ततः स जात्यन्धपुरुषस्तं पुरुषमेवमवादीत्,—'गच्छावो देवानुप्रिय !

१ क गच्छंति। २ कच हिण प०।

जाव पज्जुवासति। तते णं समणे विजयस्स तीसे य धम्ममाइक्खइ। परिसा जाव पडिगया। विजए[1]वि गए[2]। तेणं कालेणं तेणं समएणं समणस्स जेट्ठे अंतेवासी इंदभूती णामं अणगारे जाव विहरति। तते णं से भगवं गोतमे तं जातिअंधपुरिसं पासति। पासित्ता जायसड्ढे[3] जाव एवं वयासी;—'अत्थि णं भंते! केइ पुरिसे जातिअंधे जायअंधारूवे[4]?' 'हंता अत्थि'। 'कहिं णं भंते? से पुरिसे जातिअंधे जातअंधारूवे?'

वयासी,–' नो खलु देवाणुप्पिया! अज्ज मियग्गामे णगरे[6] इंदमहे वा जाव जत्ताइ वा जन्नं एए उग्गा जाव एगदिसिं एगाभिमुहा णिग्गच्छंति, एवं खलु देवाणुप्पिया! समणे भगवं महावीरे जाव इह समागए, इह संपत्ते, इहेव मियग्गामे णगरे[7] मिर्यवणुज्जाणे[8] अहापडिरूवं उग्गहं उग्गिण्हइ, उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरइ[9], तए णं से अंधपुरिसे तं पुरिसं एवं वयासी" इत्ति। 'विजयस्स तीसे य' त्ति इदमेव दृश्यम्–"विजयस्स रण्णो तीसे य महइमहालियाए परिसाए विचित्तं धम्ममाइक्खइ जहा[10] जीवा

आवामपि श्रमणं भगवन्तं यावत्पर्युपास्वहे'। ततः स जात्यन्धपुरुषः पुरतो दण्डेन प्रकृष्यमाणो २ यत्रैव श्रमणो भगवान् महावीरस्तत्रैवोपागतः। उपागत्य त्रिरादक्षिणप्रदक्षिणं करोति। कृत्वा वन्दते, नमस्यति। वन्दित्वा नमस्यित्वा यावत्पर्युपास्ते। ततः श्रमणो विजयाय तस्यै च धर्ममाख्याति परिषद् यावत् प्रतिगता। विजयोऽपि गतः। तस्मिन् काले तस्मिन् समये श्रमणस्य ज्येष्ठोऽन्तेवासी इन्द्रभूतिर्नामाऽनगारो यावद्विहरति। ततः स भगवान् गौतमस्त जात्यन्धपुरुष पश्यति। दृष्ट्वा जातश्रद्धो यावदेवमवादीत्,—'अस्ति भदन्त! कश्चित्पुरुषो जात्यन्धो

१ क –गता। २ खग गते। ३ कघडच जाव अ०। ४ खगघडच जाव ५ क जाव अ०। ६ क नगरे ग नयरे। ७ क नयरे। ८ खग मिम। ९ खग –इति। १० क जह।

'एवं खलु गोतमा! इहेव मियग्गामे णगरे विजयस्स पुत्ते मियादेवीए अत्तए मियाउत्ते णामं दारए जाति-अंधे जातअंधारूवे, नत्थि णं तस्स दारगस्स जाव आगितिमित्ते, तते णं सा मियादेवी जाव पडिजागरमाणी २ विहरति।' तते णं से भगवं गोतमे समणं भगवं महावीरं वंदाति नमंसाति। वंदित्ता नमांसित्ता एवं वयासी;— ' इच्छामि णं भंते ! अहं तुब्भेहिं अब्भणुण्णाते[ समाणे ]मियापुत्तं दारयं पासित्तए । ' ' अहासुहं देवाणुप्पिया ! ' । तते णं से भगवं गोतमे समणेणं भगवया अब्भणुण्णाते समाणे हट्ठतुट्ठे

वज्झंति" इत्यादि परिषत् यावत् प्रतिगता। 'जाइअंधे' त्ति जातेरारभ्यान्धो जात्यन्धः। स च चक्षुरुपघातादपि भवतीत्यत आह— 'जायअंधारूवे' त्ति जातमुत्पन्नमन्धकं नयनयोरादित एवानिष्पत्तेः कुत्सितान्धं रूपं यस्यासौ जातान्धकरूपः। 'अतुरियं'ति मनःस्थैर्यात्;

जातान्धकरूपः ?' 'हन्तास्ति।' 'कुत्र भदन्त ! स पुरुषो जात्यन्धो जातान्धकरूपः ?' 'एवं खलु गौतम ! इहैव मृगाग्रामे नगरे विजयस्य पुत्रो मृगादेव्या आत्मजो मृगापुत्रो नाम दारकः जात्यन्धो जातान्धकरूपः, न स्तस्तस्य दारकस्य यावदाकृतिमात्रम्, ततः सा मृगादेवी यावत्प्रतिजागरयन्ती २ विहरति'। ततः स भगवान् गौतमः श्रमणं भगवन्तं महावीरं वन्दते नमस्यति। वन्दित्वा नमस्यित्वैवमवदत्,—'इच्छामि भदन्त ! अहं युष्माभिरभ्यनुज्ञातो मृगापुत्रं दारकं द्रष्टुम्।' 'यथासुखं देवानुप्रिय !।' ततः स भगवान् गौतमः श्रमणेन भगवताऽभ्यनुज्ञातः सन् हृष्टतुष्टः

समणस्स भगवओ अंतिताओ पडिनिक्खमई। पडिनिक्खमित्ता अतुरियं जाव सोहेमाणे २ जेणेव मियग्गामे णगरे तेणेव उवागच्छति। उवागच्छित्ता मियग्गामं णगरं मज्झंमज्झेणं अणुपविस्सइ। अणुप्पविस्सित्ता जेणेव मियाए देवीए गिहे तेणेव उवागच्छति। तते णं सा मियादेवी भगवं गोतमं एज्जमाणं पासति। पासित्ता हट्ठ० जाव एवं वयासी, 'संदिसतु णं देवाणुप्पिया! किमागमणपयोयणं?' तते णं भगवं गोतमे मियं देविं एवं वयासी, 'अहण्णं देवाणुप्पिए! तव पुत्तं पासित्तु हव्वमागते'। तते णं सा मियादेवी मियापुत्तस्स दारगस्स अणुमग्गजायए चत्तारि पुत्ते सव्वालंकारविभूसिए करेति। करेत्ता भगवतो

यावत्करणादिदं दृश्यम्–"अचवलमसंभंते जुगंतरपलोयणाए दिट्ठीए पुरओ रियं" इति; तत्र चपलं कायचापल्याभावात्; क्रियाविशेषणे चैते; तथा, असंभ्रान्तो भ्रमरहितः; युगं यूपस्तत्प्रमाणो भूभागोऽपि युगं, तस्यान्तरे मध्ये प्रलोकनं यस्याः सा तथा तया

श्रमणस्य भगवतोऽन्तिकात् प्रतिनिष्कामति। प्रतिनिष्क्रम्यात्वरितं यावच्छोधमानो २ यत्रैव मृगाग्रामं नगरं तत्रैवोपागच्छति। उपागत्य मृगाग्रामं नगरं मध्यमध्येनानुप्रविशति। अनुप्रविश्य यत्रैव मृगाया देव्या गृहं तत्रैवोपागच्छति। ततः सा मृगादेवी भगवन्तं गौतममायन्तं पश्यति। दृष्ट्वा हृष्ट० यावदेवमवदत्–'संदिशतु देवानुप्रिय! किमागमनप्रयोजनम्?' ततो भगवान् गौतमो मृगां देवीमेवमवदत्, 'अहं देवानुप्रिये! तव पुत्रं द्रष्टुं शीघ्रमागतः।' ततः सा मृगादेवी मृगापुत्रस्य दारकस्यानुमार्गजातांश्चतुरः पुत्रान् सर्वालंकारविभूषितान् करोति। कृत्वा भगवतो

१मृगा० अध्य०, श्रीगौतमस्वामिनो मृगापुत्रं द्रष्टुं गमनम्।

गोतमस्स पाएसु पाडेति । पाडेत्ता एवं वयासी, 'एए णं भंते! मम पुत्ते पासह' । तते णं से भगवं गोतमे मियं देविं एवं वयासी;—'नो खलु देवाणुप्पिए! अहं एए तव पुत्ते पासिउं हव्वमागए, तत्थ णं जे से तव जेट्ठे पुत्ते मियापुत्ते दारए जातिअंधे जाव अंधारूवे, जण्णं तुमं रहस्सियंसि भूमिघरंसि रहस्सिएणं भत्तपाणेणं पडिजागरमाणी २ विहरसि, तं नं अहं पासिउं हव्वमागते' । तते णं सा मियादेवी भगवं गोतमं एवं वयासी;—'से के णं गोतमा! से तहारूवे णाणी वा तवस्सी वा जेणं तव एसमट्ठे मम ताव रहस्सकते तुब्भं हव्वमक्खाते, जतो णं तुब्भे जाणह?' तते णं भगवं गोतमे मियं

दृष्ट्या चक्षुपा, 'रियं' इति ईर्या गमनं तद्विषयो मार्गोऽपीर्याऽतस्ताम्। 'जेणेव'त्ति यस्मिन् देशे। 'हट्ठ० जाव'त्ति इह "हट्ठतुट्ठमाणंदिअ"—इत्यादि दृश्यम्; एकार्थाश्चैते शब्दाः 'हव्वं' ति शीघ्रम्। 'जाओ णं' ति यस्मात्। 'जाया यावि-होत्था' जाता

गौतमस्य पादयोः पातयति। पातयित्वैवमवदत्,—एतान् भदन्त! मम पुत्रान् पश्यत।' ततः स भगवान् गौतमो मृगां देवीमेवमवदत्, 'नो खलु देवानुप्रिये! अहमेतांस्तव पुत्रान् द्रष्टुं शीघ्रमागतः, तत्र यः स तव ज्येष्ठः पुत्रो मृगापुत्रो दारको जात्यन्धो यावदन्धकरूपः, यं त्वं राहसिके भूमिगृहे राहसिकेन भक्तपानेन प्रतिजागरयन्ती २ विहरसि तमहं द्रष्टुं शीघ्रमागतः'। ततः सा मृगादेवी भगवन्तं गौतममेवमवदत्,—'को गौतम! स तथारूपो ज्ञानी वा तपस्वी वा येन तवैषोऽर्थो मम तावद् रहस्यकृतस्तुभ्यं शीघ्रमाख्यातो यतो यूयं जानीथ?'

देविं एवं वयासी;–'एवं खलु देवाणुप्पिए! मम धम्मायरिए समणे भगवं जाव ततो णं अहं जाणामि'। जावं च णं मियादेवी भगवया गोतमेणं सद्धिं एवमट्ठं संलवाति तावं च णं मियापुत्तस्स दारगस्स भत्तवेला जाया यावि होत्था। तते णं सा मियादेवी भगवं गोयमे एवं वयासी;–'तुब्भे णं भंते! इह चेव चिट्ठह जा णं अहं तुब्भं मियापुत्तं दारयं उवदंसेमि'त्ति कट्टु जेणेव भत्तपाणघरए तेणेव उवागच्छति। उवागच्छित्ता वत्थपरियट्टं करोति। करेत्ता कट्ठसगडियं गेण्हाति २ विपुलस्स असणपाण-खातिमसातिमस्स भरेति २ तं कट्ठसगडियं अणुकड्ढमाणी २ जेणेव भगवं गोतमे तेणेव उवागच्छाति

---

चाप्यभवदित्यर्थः 'वत्थपरियट्टं'ति वस्त्रपरिवर्तनम्।

---

ततो भगवान् गौतमो मृगां देवीमेवमवदत्–'एवं खलु देवानुप्रिये! मम धर्माचार्यः श्रमणो भगवान् यावत् ततोऽहं जानामि।' यावच्च मृगादेवी भगवता गौतमेन सार्धमेतमर्थं सलपति तावच्च मृगापुत्रस्य दारकस्य भक्तवेला जाता चाप्यभवत्। ततः सा मृगावती भगवन्तं गौतममेवमवादीत्,—'यूयं भदन्त! इहैव तिष्ठत, यावदहं युष्मभ्यं मृगापुत्रं दारकमुपदर्शयामि' इति कृत्वा यत्रैव भक्तपानगृहं तत्रैवो-पागच्छति। उपागत्य वस्त्रपरिवर्तं करोति। कृत्वा काष्ठशकटिकां गृह्णाति। गृहीत्वा विपुलेनाशनपानखादिमस्वादिम्ना भरति। भृत्वा तां



१ मृगा० अध्य० मृगा-देव्या भूमिगृहे गमनम्।

२ भगवं गोतमं एवं वयासी;—' एह णं तुब्भे भंते ! ममं [मए सद्धिं] अणुगच्छह जा णं अहं तुब्भं मियापुत्तं दारयं उवदंसेमि '। तते णं से भगवं गोतमे मियं देविं पिट्ठओ समणुगच्छति। तते णं सा मियादेवी तं कट्ठसगडियं अणुकड्ढमाणी २ जेणेव भूमिघरे तेणेव उवागच्छाति २ चउप्पुडेणं वत्थेणं मुहं बंधमाणी भगवं गोतमं एवं वयासी;—' तुब्भेवि य णं भंते ! मुहपोत्तियाए मुहं बंधह '। तते णं भगवं गोतमे मियादेवीए एवं वुत्ते समाणे मुहपोत्तियाए मुहं बंधंति [बंधइ]। तते णं सा मियादेवी परंमुही भूमीघरस्स दुवारं विहाडेति। तते णं गंधो निग्गच्छति। से जहानामए अहिमडे तिवाजाव ततोवि य णं अणिट्ठ-

' से जहानामए ' त्ति तद्यथानामेति वाक्यालंकारे। ' अहिमडे इवा सप्पकडेवरे इवा ' इह यावत्करणात् " गोमडे इवा सुणहमडे इवा " इत्यादि द्रष्टव्यम्। ' ततोवि णं ' ति ततोऽपि अहिकडेवरादिगन्धादपि ' अणिट्ठतराए चेव ' त्ति अनि-

काष्ठशकटिकामनुकर्षन्ती २ यत्रैव भगवान् गौतमस्तत्रैवोपागच्छति। उपागत्य भगवन्तं गौतममेवमवदत्,—' एत यूयं भदन्त ! मामनुगच्छत यावदहं युष्मभ्यं मृगापुत्रं दारकमुपदर्शयामि '। ततः स भगवान् गौतमो मृगादेवीं पृष्ठतः समनुगच्छति। ततः सा मृगादेवी तां काष्ठशकटिकामनुकर्षन्ती २ यत्रैव भूमिगृहं तत्रैवोपागच्छति। उपागत्य चतुष्पुटेन वस्त्रेण मुखं बध्नती भगवन्तं गौतममेवमवादीत्,—' यूयमपि च भदन्त ! मुखवस्त्रिकया मुखं बध्नीत '। ततो भगवान् गौतमो मृगादेव्यैवमुक्तः सन् मुखवस्त्रिकया मुखं बध्नाति। ततः सा मृगादेवी पराङ्मुखी भूमीगृहस्य द्वारं विघाटयति। ततो गन्धो निर्गच्छति। स यथानामाऽहिमृतकस्य वा यावत् ततोऽपि चानिष्टतरश्चैव

तराए चेव जाव गंधे पण्णत्ते । तते णं से मियापुत्ते दारए तस्स विपुलस्स असणपाणखाइमसाइमस्स गंधेणं अभिभूते समाणे तंसि विपुलंसि असणपाणखाइमसाइमंसि मुच्छिते ४ तं विपुलं असणं ४ आसएणं आहारेति २ खिप्पामेव विद्धंसेति । ततो पच्छा पूयत्ताए य सोणियत्ताए य परिणामेति । तंपि य णं पूयं च सोणियं च आहारेति । तते णं भगवतो गोतमस्स तं मियापुत्तं दारयं पासित्ता अयमेयारूवे अज्झत्थिते ४ समुप्पज्जित्था,—अहो णं इमे दारए पुरा पोराणाणं दुच्चिण्णाणं दुप्पडिक्कंताणं असु-

इतर एव 'गन्धः' इति गम्यते; इह यावत्करणात् "अकंततराए चेव अप्पियतराए चेव अमणुन्नतराए चेव अमणामतराए चेव" इति दृश्यम्; एकार्थान्येतानि चत्वार्यपीति । 'मुच्छिए' इत्यत्र "गढिते गिद्धे अज्झोववन्ने" इति पदत्रयमन्यद् दृश्यम्, एकार्थाश्चैते । 'अज्झत्थिए' इत्यत्र "चिंतिए कप्पिए पत्थिए मणोगए संकप्पे" इति दृश्यम्; एतान्यप्येकार्थानि । 'पुरा पुराणाणं दुच्चिन्नाणं' इहाक्षरघटना–पुराणानां जरठानां कक्खडीभूतानामित्यर्थः पुरा पूर्वकाले दुश्चीर्णानां प्राणातिपातादिदुश्चरितहेतुकानाम् । 'दुप्पडिक्कंताणं'ति दुःशब्दोऽभावार्थः, तेन प्रायश्चित्तप्रतिपत्त्यादिनाऽप्रतिक्रान्तानामनिवर्त्तितविपाकानामित्यर्थः 'असुभाणं'ति असु-

यावद् गन्धः प्रज्ञप्तः । ततः स मृगापुत्रो दारकस्तस्य विपुलस्याशनपानखादिमस्वादिम्नो गन्धेनाभिभूतः सस्तस्मिन् विपुलेऽशनपानखादिमस्वादिमनि मूर्च्छितः ४ तं विपुलमशनं ४ आस्येनाहरति, आहृत्य क्षिप्रमेव विध्वंसयति । ततः पश्चात् पूयतया च शोणिततया च परिणमयति । तदपि च पूयं च शोणितं चाहरति । ततो भगवतो गौतमस्य तं मृगापुत्रं दारकं दृष्ट्वाऽयमेतद्रूप आध्यात्मिकः ४ समुदपद्यत, 'अहो अयं दारकः

भाणं पावाणं कडाणं कम्माणं पावगं फलवित्तिविसेसं पच्चणुभवमाणे विहरति, ण मे दिट्ठा णरगा वा णेरइया वा, पच्चक्खं खलु अयं पुरिसे नरयपडिरूवियं वेयणं वेएति' त्ति कट्टु मियं देविं आपुच्छति २ मियाए देवीए गिहाओ पडिनिक्खमति २ मियग्गामं णगरं मज्झंमज्झेणं निग्गच्छति २ जेणेव समणे भगवं महावीरे तेणेव उवागच्छति । उवागच्छित्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिण-पयाहिणं करेति । करेत्ता वंदति नमंसति । वंदित्ता नमंसित्ता एवं वयासी;—'एवं खलु अहं तुब्भेहिं अब्भणुण्णाए समाणे मियग्गामं नगरं मज्झंमज्झेणं अणुपविसामि २ जेणेव मियाए देवीए गिहे तेणेव उवागते । तते णं सा मियादेवी ममं एज्जमाणं पासति २ हट्ठ० तं चेव सव्वं जाव पूयं च सोणियं च

---

खहेतूनाम् । 'पावाणं'ति पापानां दुष्टस्वभावानाम् । 'कम्माणं'ति ज्ञानावरणादीनाम् ।

---

पुरा पुराणानां दुश्चीर्णानां दुष्प्रतिक्रान्तानामशुभानां पापानां कृतानां कर्मणां पापं फलवृत्तिविशेषे प्रत्यनुभवन् विहरति, न मया दृष्टा नरका वा नैरयिका वा, प्रत्यक्षं खल्वयं पुरुषो नरकप्रतिरूपिकां वेदनां वेदयति' इति कृत्वा मृगां देवीमापृच्छते । आपृच्छय मृगाया देव्या गृहात् प्रतिनिष्क्रामति, प्रतिनिष्क्रम्य मृगाग्रामान्नगरान्मध्यमध्येन निर्गच्छति, निर्गम्य यत्रैव श्रमणो भगवान् महावीरस्तत्रैवोपागच्छति । उपागत्य श्रमणं भगवन्तं महावीरं त्रिरादक्षिणप्रदक्षिणं करोति । कृत्वा वन्दते नमस्यति । वन्दित्वा नमस्यित्वैवमवादीत्,—'एवं खल्वहं युष्माभिरभ्य-नुज्ञातः सन् मृगाग्रामं नगरं मध्यमध्येनानुप्राविशम्, अनुप्रविश्य यत्रैव मृगाया देव्या गृहं तत्रैवोपागतः । ततः सा मृगादेवी मामेयमानं

आहारेति। तते णं मम इमे अज्झात्थिते ४ समुप्पज्जित्था;—'अहो णं इमे दारए पुरा जाव विहरति'। (सू० ४) से णं भंते ! पुरिसे पुव्वभवे के आसि, किंनामए वा किंगोत्तए वा कयरंसि गामंसि वा नगरंसि वा किं वा दच्चा किं वा भोच्चा किं वा समायरित्ता केसिं वा पुरा पोराणाणं जाव विहरति ?' गोयमाई समणे

'पुव्वभवे के आसि' इत्यत एवमध्येयम्—"किंनामए वा किंगोत्तए वा" तत्र नाम याद‍ृच्छिकमभिधानम्, गोत्रं तु यथार्थम्, कुलं वा; "कयरंसि गामंसि वा नगरंसि वा किं वा दच्चा किं वा भोच्चा किं वा समायरित्ता केसिं वा पुरा पोराणाणं दुच्चिन्नाणं दुप्पडिकंताणं असुहाणं पावाणं कम्माणं पावगं फलवित्तिविसेसं पच्चणुब्भवमाणे विहरइ" इति। 'गोयम' त्ति गौतम इत्येवं 'आमन्त्र्य' इति गम्यते। 'रिद्धत्थिमिए'त्ति ऋद्धिप्रधानं स्तिमितं च निर्भयं यत् तत् तथा। 'वण्णउ'त्ति नगरवर्णकः। स चौपपातिकवद् द्रष्टव्यः। 'अदूरसामंते'त्ति नातिदूरे नातिसमीप इत्यर्थः। 'खेडे'त्ति धूलिप्राकारम्। 'रिद्ध'त्ति "रिद्धत्थिमियसमिद्धे" इति द्रष्टव्यम्।

'आभोए'त्ति विस्तरः। 'रट्ठउडे'त्ति राष्ट्रकूटो मण्डलोपजीवी राजनियोगिकः। 'अहम्मिए' त्ति अधार्मिकः, यावत्करणादिदं दृश्यम्—"अधम्माणुए अधम्मिट्ठे अधम्मक्खाई अधम्मपलोई अधम्मपलज्जणे अधम्मसमुदाचारे अधम्मेणं चेव वित्तिं कप्पेमाणे

पश्यति, दृष्ट्वा हृष्ट० तदेव सर्वं यावत्पूय च शोणितं चाहरति। ततो ममायमाध्यात्मिकः ४ समुदपद्यत,—'अहो अयं दारकः पुरा यावद् विहरति'। स भदन्त! पुरुषः पूर्वभवे क आसीत्, किंनामा वा किंगोत्रो वा कतरस्मिन् ग्रामे वा नगरे वा किं वा दत्त्वा किं वा भुक्त्वा किं वा समाचर्य केषां वा पुरा पुराणानां यावद् विहरति ?, 'गौतम' इति' श्रमणो भगवान्महावीरो भगवन्तं गौतममेवमवदत्,—' एवं खलु

भगवं महावीरे भगवं गोतमं एवं वयासी;—'एवं खलु गोतमा ! तेणं कालेणं तेणं समएणं इहेव जंबु- द्दीवे दीवे भारहे वासे सयदुवारे णामं णगरे होत्था रिद्धत्थिमिते॰ वण्णओ। तत्थ णं सयदुवारे णगरे धणवती नामं राया होत्था। तस्स णं सयदुवारस्स णगरस्स अदूरसामंते दाहिणपुरत्थिमे दिसीभाए विजयवद्धमाणे णामं खेडे होत्था रिद्ध॰। तस्स णं विजयवद्धमाणस्स खेडस्स पंच गामसयाइं आभोए यावि होत्था। तत्थ णं विजयवद्धमाणे खेडे एक्काई नाम रट्ठकूडे होत्था अहाम्मिए जाव दुप्पडियाणंदे।

दुस्सीले दुव्वए" इति। तत्राधार्मिकत्वप्रपञ्चनायोच्यते 'अधम्माणुए' अधर्मं श्रुतचारित्राभावमनुगच्छतीत्यधर्मानुगः। कुत एतदेव- मित्याह—अधर्म एवेष्टो वल्लभः पूजितो वा यस्य सोऽधर्मेष्टः; अतिशयेन वाऽधर्मी धर्मवर्जित इत्यधर्मिष्ठः। अत एवाऽधर्माख्यायी अधर्मप्रतिपादकः। अधर्मख्यातिः 'अविद्यमानधर्मोऽयम्' इत्येवं प्रसिद्धिकः। तथा, अधर्मं प्रलोकयत्युपादेयतया प्रेक्षते यः स तथा। अत एवाधर्मप्ररजनोऽधर्मरागी। अत एवाधर्मः समुदाचारः समाचारो यस्य स तथा। अत एवाधर्मेण हिंसादिना वृत्तिं जीविकां कल्पयन् सन्। दुःशीलः शुभस्वभावहीनः। दुर्व्रतश्च व्रतवर्जितः। दुष्प्रत्यानन्दः साधुदर्शनादिना नाऽऽनन्द्यत इति।

गौतम! तस्मिन् काले तस्मिन् समये इहैव जम्बूद्वीपे द्वीपे भारते वर्षे शतद्वारं नाम नगरमभवद् ऋद्धस्तिमित॰ वर्णकः। तत्र शतद्वारे नगरे धनपतिर्नाम राजाऽभवत्। तस्य शतद्वारस्य नगरस्यादूरासन्ने दक्षिणपौरस्त्ये दिग्भागे विजयवर्धमानो नाम खेटोऽभवद् ऋद्ध॰। तस्य विजय- वर्धमानस्य खेटस्य पञ्च ग्रामशतान्याभोगश्चाप्यभवत्। तत्र विजयवर्धमाने खेट एकादिर्नाम राष्ट्रकूटोऽभवदधार्मिको यावद् दुष्प्रत्यानन्दः।

से णं एक्काई रट्ठकूडे विजयवद्धमाणस्य खेडस्स पंचण्हं गामसयाणं आहेवच्चं जाव पालेमाणे विहरति। तते णं से एक्काई विजयवद्धमाणस्स खेडस्स पंच गामसयाइं बहूहिं करेहि य भरेहि य विद्धीहि य उक्कोडाहि य पराभवेहि य दिज्जेहि य भिज्जेहि य कुत्तेहि य लंछपोसेहि य आलीवणेहि य पंथको-

'आहेवच्चं' ति अधिपतिकर्म। यावत्करणादिदं दृश्यम्,–"पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे" इति। तत्र पुरोवर्त्तित्वमग्रेसरतां, स्वामित्वं नायकत्वम्, भर्तृत्वं पोषकत्वम्, महत्तरकत्वम् उत्तमत्वम्, आज्ञेश्वरस्याज्ञाप्रधानस्य यत् सेनापतित्वं तदाज्ञेश्वरसेनापतित्वम्। कारयन् नियोगिकैर्विधापयन्; पालयन् स्वयमेवेति। 'करेहि य' त्ति करैः क्षेत्राद्याश्रित्य राजदेयद्रव्यैः। 'भरेहि य' त्ति तेषामेव प्राचुर्यैः। 'विद्धीहि य' त्ति वृद्धिभिः कुटुम्बिनां वितीर्णस्य धान्यस्य द्विगुणादेर्ग्रहणैः, "वृत्तिभिः" इति क्वचित् तत्र वृत्तयो राजादेशकारिणां जीविकाः। 'उक्कोडाहि य'त्ति लञ्चाभिः। पराभएहि य' त्ति पराभवैः। 'देज्जेहि य' त्ति अनाभवद्दातव्यैः। 'भेज्जेहि य' त्ति यानि पुरुषमारणाद्यपराधमाश्रित्य ग्रामादिषु दण्डद्रव्याणि निपतन्ति, कौटुम्बिकान् प्रति च भेदेनोद्ग्राह्यन्ते तानि भेद्यानिः अतस्तैः। कुत्तेहि य' त्ति कुतकं 'एतावद् द्रव्यं त्वया देयम्' इत्येवं नियन्त्रणया नियोगिकस्य देशादेर्यत् समर्पणमिति। 'लंछापोसेहि य'त्ति लञ्छाश्चौरविशेषाः संभाव्यन्ते, तेषां पोषाः पोषणानि तैः। 'आलीवणएहि

स एकादी राष्ट्रकूटो विजयवर्धमानस्य खेटस्य पञ्चानां ग्रामशतानामाधिपत्यं यावत् पालयमानो विहरति। ततः स एकादिर्विजयवर्धमानस्य खेटस्य पञ्च ग्रामशतानि बहुभिः करैश्च भरैश्च वृद्धिभिश्च लञ्चाभिश्च पराभवैश्च देयैश्च भेद्यैश्च कुतकैश्च लञ्छपोषैश्चादीपनैश्च सार्थघातैश्चावपीडयन् २

ट्टेहि य ओवीलेमाणे २ विहम्मेमाणे २ तज्जेमाणे २ तालेमाणे २ निद्धणे करेमाणे २ विहराति। तते णं से एक्काई रट्ठकूडे विजयवद्धमाणस्स खेडस्स बहूणं राइसर० जाव सत्थवाहाणं अण्णेसिं च बहूणं गामेल्लग-पुरिसाणं बहूसु कज्जेसु कारणेसु य मंतेसु गुज्झेसु निच्छएसु ववहारेसु य सुणमाणे भणति न सुणोमि, असुणमाणे भणति सुणेमि एवं पस्समाणे भासमाणे गेण्हमाणे जाणमाणे। तते णं से एक्काई रट्ठकूडे

---

य' त्ति व्याकुललोकानां मोषणार्थं ग्रामादिप्रदीपनकैः। 'पंथकोट्टेहि य' त्ति सार्थघातैः। 'ओवीलेमाणे' त्ति अवपीलयन् बाधयन्। 'विहम्मेमाणे' त्ति विधर्मयन् स्वाचारभ्रष्टान् कुर्वन्। 'तज्जेमाणे' त्ति कृतावष्टम्भांस्तर्जयन् 'ज्ञास्यथ रे मम इदं इदं च न दत्थ' इत्येवं मेषयन्। 'तालेमाणे' त्ति कषचपेटादिमिस्ताडयन्। 'निद्धणे करेमाणे' त्ति निर्धनान् कुर्वाणो विहरति। 'तए णं से एक्काई रट्ठकूडे विजयवद्धमाणस्स खेडस्स' सत्कानाम् 'बहूणं राईसरतलवरमाडंबियकोडुंबियसत्थवाहाणं' इह तलवरा राजप्रसादवन्तो राजो-त्थासनिकाः, माडम्बिका मडम्बाधिपतयः, मडम्बं च योजनद्वयाभ्यन्तरेऽविद्यमानग्रामादिनिवेशाः संनिवेशविशेषाः प्रसिद्धाः। 'कज्जेसु य' त्ति कार्येषु प्रयोजनेषु निष्पन्नेषु, 'कारणेसु' त्ति सिसाधयिषितप्रयोजनोपायेषु विषयभूतेषु ये मन्त्रादयो व्यवहारान्तास्तेषु;

---

विधर्मयन् २ तर्जयन् २ ताडयन् २ निर्धनान् कुर्वन् २ विहरति। ततः स एकाकी राष्ट्रकूटो विजयवर्धमानस्य खेटस्य बहूनां राजेश्वर० यावत् सार्थवाहानामन्येषां च बहूनां ग्रामेयकपुरुषाणां बहुषु कार्येषु कारणेषु च मन्त्रेषु गुह्येषु निश्चयेषु व्यवहारेषु च शृण्वन् भणति न शृणोमि, अशृण्वन् भणति शृणोमि एवं पश्यन् भाषमाणो गृह्णन् जानन्। ततः स एकादी राष्ट्रकूट एतत्कर्मा एतत्प्रधानं एतद्विद्य एतत्समाचारः

एयकम्मे एयप्पहाणे एयविज्जे एयसमायारे सुबहुं पावं कम्मं कलिकलुसं समज्जिणमाणे विहरति । तते णं तस्स एगाइयस्स रट्ठकूडस्स अण्णया कयाइ सरीरगंसि जमगसमगमेव सोलस रोयातंका पाउब्भूया, तं जहा; —सासे १ कासे २ जरे ३ दाहे ४ कुच्छिसूले ५ भगंदरे ६ अरिसे ७ अजीरते ८ दिट्ठी ९ मुद्धसूले १० अकारए ११ ॥१॥ अच्छिवेयणा १२ कण्णवेयणा १३ कंडू १४ दओदरे १५ कोढे १६ । तते णं से एक्काई रट्ठकूडे सोलसहिं रोगातंकेहिं अभिभूते समाणे कोडुंबियपुरिसे सद्दावेति २ एव वयासी;—'गच्छहं णं तुब्भे देवाणुप्पिया ! विजयवद्धमाणे खेडे सिंघाडग-तिय-चउक्क-चच्चर-महापहपहेसु महया २ सद्देणं

तत्र मन्त्रः पर्यालोचनानि, गुह्यानि रहस्यानि, निश्चया वस्तुनिर्णयाः, व्यवहारा विवादास्तेषु विषये। 'एयकम्मे' त्ति एतद्व्यापारः, एतदेव वा काम्यं कमनीयं यस्य स तथा। 'एयप्पहाणे' त्ति एतत्प्रधान एतन्निष्ठ इत्यर्थः 'एयविज्जे' त्ति, 'एषैव विद्या विज्ञानं यस्य स तथा। 'एयसमायारे' त्ति एतज्जीतकल्प इत्यर्थः। 'पावं कम्मं' ति अशुभं ज्ञानावरणादि । 'कलिकलुसं' ति कलहहेतुकलुषं मलीमसमित्यर्थः

सुबहु पापं कर्म कलिकलुषं समर्जयन् विहरति। ततस्तस्यैकादे राष्ट्रकूटस्यान्यदा कदाचिच्छरीरे युगपदेव षोडश रोगातङ्काः प्रादुर्भूताः तद्यथा,— श्वासः १ कासः २ ज्वरः ३ दाहः ४ कुक्षिशूलम् ५ भगन्दरः ६ अर्शः ७ अजीर्णम् ८ दृष्टि—मूर्धशूले ९—१० अरोचकः ११ अक्षिवेदना १२ कर्णवेदना १३ कण्डूः १४ दकोदरः १५ कुष्ठः १६ । ततः स एकादी राष्ट्रकूटः षोडशभी रोगातङ्कैरभिभूतः सन् कौटुम्बिकपुरुषान् शब्दा-ययति । शब्दाययित्वैवमवदत्,—'गच्छत यूयं देवानुप्रियाः ! विजयवर्धमाने खेटे शृङ्गाटक-त्रिक-चतुष्क-चत्वर-महापथपथेषु महताशब्देन

उग्घोसेमाणा २ एवं [इह] वयह;—'एवं खलु देवाणुप्पिया ! एक्काई० सरीरगंसि सोलस रोगातंका पाउब्भूता, जहा,—सासे १ कासे २ जरे ३ जाव कोढे १६; तं जो णं इच्छति देवाणुप्पिया ! वेज्जो वा वेज्जपुत्तो वा जाणओ वा जाणयपुत्तो वा तेइच्छिओ तेइच्छियपुत्तो वा एगातिस्स तेसिं सोलसण्हं रोगातंकाणं एगमवि रोयायंकं उवसामित्तते, तस्स णं एक्काई रट्ठकूडे विपुलं अत्थसंपयाणं दलयति, दोच्चंपि तच्चंपि उग्घोसेह २ त्ता एयमाणत्तियं पच्चप्पिणह' । तते णं ते कोडुंबियपुरिसा जाव पच्चप्पिणंति ।

'जमगसमगं'ति युगपत् । 'रोगायंक'त्ति रोगा व्याधयस्त एवातङ्काः कष्टजीवितकारिणः। 'सासे' इत्यादिश्लोकः।'जोणीसूले'त्ति अपपाठः, 'कुच्छिसूले' इत्यस्यान्यत्र दर्शनात्। 'भगंदले'त्ति भगन्दरः। 'अकारए'त्ति अरोचकः। 'अच्छीवेयणा' इत्यादि श्लोकातिरिक्तम्। 'दओदरे' त्ति जलोदरम् । शृङ्गाटकादयः स्थानविशेषाः। 'वेज्जो व' त्ति वैद्यशास्त्रे चिकित्सायां च कुशलः। 'वेज्जपुत्तो व' त्ति तत्पुत्रः। 'जाणुओ व' त्ति ज्ञायकः केवलशास्त्रकुशलः। 'तेगिच्छिओ व'त्ति चिकित्सामात्रकुशलः। 'अत्थसंपयाणं दलयइ' त्ति अर्थदानं करोतीत्यर्थः ।

उद्घोपयन्तः २ एवं वदत,—'एवं खलु देवानुप्रियाः ! एकादिशरीरे षोडश रोगातङ्काः प्रादुर्भूताः, तद्यथा,—श्वासः १ कासः २ ज्वरः ३ यावत् कुष्ठः १६, तद् य इच्छति देवानुप्रियाः ! वैद्यो वा वैद्यपुत्रो वा ज्ञायको वा ज्ञायकपुत्रो वा चिकित्सकश्चिकित्सकपुत्रो वैकादेस्तेषां षोडशानां रोगातङ्कानामेकमपि रोगातङ्कमुपशमयितुम्, तस्यैकादी राष्ट्रकूटो विपुलमर्थसंप्रदानं करोति, द्विरपि त्रिरप्युद्घोषयत, उद्घोष्यैतामाज्ञप्तिं प्रत्यर्पयत' । ततस्ते कौटुम्बिकपुरुषा यावत् प्रत्यर्पयन्ति ।

तते णं से विजयवद्धमाणे खेडे इमं एयारूवं उग्घोसणं सोच्चा णिसम्म बहवे वेज्जा य ६ सत्थकोसहत्थगया सएहिं सएहिं गेहेहिंतो पडिनिक्खमंति २ त्ता विजयवद्धमाणस्स खेडस्स मज्झंमज्झेण जेणेव एगाइरट्ठकूडस्स गेहे तेणेव उवागच्छंति २ त्ता एगाइसरीरयं परामुसंति २ त्ता तेसिं रोगाणं निदाणं पुच्छंति २ त्ता एक्काती-रट्ठकूडस्स बहूहिं अब्भंगेहि य उवट्टणाहि य सिणेहपाणेहि य वमणेहि य विरेयणाहि य सेयणाहि य अवद्दाहणाहि य अवण्हाणेहि य अणुवासणाहि य वत्थिकम्मेहि य निरुहेहि य सिरावेधेहि य तच्छणेहि य पच्छणेहि य

'सत्थकोसहत्थगय' त्ति शस्त्रकोशो नखरदानादिभाजनं हस्ते गतो व्यवस्थितो येषां ते तथा। 'अवद्दाहणाहि य' त्ति दम्भनैः। 'अवण्हाणेहि य' त्ति तथाविधद्रव्यसंस्कृतजलेन स्नानैः। 'अणुवासणाहि य' त्ति अपानेन जठरे तैलप्रवेशनैः। 'वत्थिकम्मेहि य' त्ति चर्मवेष्टनप्रयोगेण शिरःप्रभृतीनां स्नेहपूरणैः, गुदे वा वर्त्यादिक्षेपणैः। 'निरुहेहि य' त्ति निरुहः अनुवासः एव, केवलं द्रव्यकृतो विशेषः। 'सिरावेहेहि य' त्ति नाडीवेधैः। 'तच्छणेहि य' त्ति क्षुरादिना त्वचस्तनूकरणैः। 'पच्छणेहि य' त्ति ह्रस्वैस्त्वचो विदारणैः।

ततो विजयवर्धमाने खेट इमामेतद्रूपामुद्घोषणां श्रुत्वा निशम्य बहवो वैद्याश्च ६ शस्त्रकोशहस्तगताः स्वेभ्यो स्वेभ्यः गृहेभ्यः प्रति-निष्कामन्ति, प्रतिनिष्कम्य विजयवर्धमानस्य खेटस्य मध्यमध्येन यत्रैवैकादिराष्ट्रकूटस्य गृहं तत्रैवोपागच्छन्ति, उपागत्यैकादिशरीरं परा-मृशन्ति, परामृश्य तेषां रोगाणां निदानं पृच्छन्ति पृष्ट्वैकादिराष्ट्रकूटस्य बहुभिरभ्यङ्गैश्चोद्वर्तनाभिश्च स्नेहपानैश्च वमनैश्च विरेचनाभिश्च सेच-नाभिश्चावदाहनाभिश्चावस्नानैश्चानुवासनाभिश्च बस्तिकर्मभिश्च निरुहैश्च सिरोवेधैश्च तक्षणैश्च प्रतक्षणैश्च शिरोबस्तिभिश्च तर्पणैश्च पुटपाकैश्च

सिरोबत्थीहि य तप्पणेहि य पुडपागेहि य छल्लीहि य मूलेहि य कंदेहि य पत्तेहि य पुप्फेहि य फलेहि य बीएहि य सिलियाहि य गुलियाहि य ओसहेहि य भेसज्जेहि य इच्छंति, तेसिं सोलसण्हं रोयातंकाणं एगमवि रोयायंकं उवसामित्तए, णो चेव णं संचाएंति उवसामित्तते। ततेणं ते बहवे वेज्जाय वेज्जपुत्ताय ६ जाहे नो संचाएंति तेसिं सोलसण्हं रोयातंकाणं एगमवि रोयायंकं उवसामित्तए, ताहे संता तंता परितंता जामेव दिसं पाउब्भूता तामेव दिसं पडिगता।

'सिरवत्थीहि य' त्ति शिरोवस्तिभिः शिरसि बद्धस्य चर्मकोशस्य द्रव्यसंस्कृततैलाद्यापूरणलक्षणाभिः। प्रागुक्तबस्तिकर्माणि सामान्यानि, अनुवास-निरुह-शिरोबस्तयस्तद्भेदाः। 'तप्पणेहि य' त्ति तर्पणैः स्नेहादिभिः शरीरस्य बृंहणैः। 'पुडपागेहि य' त्ति पुटपाकाः पाकविशेषनिष्पन्ना औषधविशेषाः। 'छल्लीहि य' त्ति छल्लयो रोहिणीप्रभृतयः। 'सिलियाहि य' त्ति शिलिकाः किराततिक्तकप्रभृतयः। 'गुलियाहि य' त्ति द्रव्यवटिकाः। 'ओसहेहि य' त्ति औषधानि एकद्रव्यरूपाणि। 'भेसज्जेहि य' त्ति भैषज्यानि अनेकद्रव्ययोगरूपाणि, पथ्यानि वेति। 'संत' त्ति श्रान्ता देहखेदेन। 'तंत' त्ति तान्ता मनःखेदेन। 'परितंत' त्ति उभयखेदेनेति।

छल्लिभिश्च मूलैश्च कन्दैश्च पत्रैश्च पुष्पैश्च फलैश्च बीजैश्च शिलिकाभिश्च गुडिकाभिश्चौषधैश्च भैषज्यैश्चेच्छन्ति तेषां षोडशानां रोगातङ्कानामेकमपि रोगातङ्कमुपशमयितुम्, नो एव संशक्नुवन्त्युपशमयितुम्। ततस्ते बहवो वैद्या वैद्यपुत्राः ५ यदा नो संशक्नुवन्ति तेषां षोडशानां रोगातङ्कानामेकमपि रोगातङ्कमुपशमयितुम्, तदा श्रान्तास्तान्ताः परितान्ता यस्या एव दिशः प्रादुर्भूतास्तामेव दिशं प्रतिगताः।

तते णं एक्काई० विज्जोहियपडियाइक्खिए परियारगपरिचत्ते निव्विण्णोसहभेसज्जे सोलसरोगातंकेहिं अभिभूते समाणे रज्जे य रट्ठे य जाव अंतेउरे य मुच्छिते रज्जं च २ आसाएमाणे पत्थेमाणे पीहेमाणे अहिलसमाणे अट्टदुहट्टवसट्टे अड्ढाइज्जाइं वाससयाइं परमाउं पालयित्ता कालमासे कालं किच्चा इमीसे रयणप्पभाए पुढवीए उक्कोससागरोवमट्ठितीएसु नेरइएसु णेरइयत्ताए उववण्णे। से णं ततो अंणतरं उव्वट्टित्ता इहेव मियग्गामे नगरे विजयस्स खत्तियस्स मियाए देवीए कुच्छिंसि पुत्तत्ताए उववण्णे। तते णं तीसे मियाए देवीए सरीरे वेयणा पाउब्भूया उज्जला जाव जलंता।

'रज्जे य रट्ठे य' इत्यत्र यावत्करणादिदं दृश्यम्,—" कोसे य कोट्ठागारे य बले य वाहणे य पुरे य " इति। ' मुच्छिए गढिए गिद्धे अज्झोववन्ने " त्ति एकार्थाः। ' आसाएमाणे ' इत्यादय एकार्थाः। ' अट्टदुहट्टवसट्टे ' त्ति आर्त्तो मनसा दुःखितः, दुःखार्त्तो देहेन, वशार्त्तस्तु इन्द्रियवशेन पीडितः, ततः कर्मधारयः। 'उज्जला' इह यावत्करणादिदं दृश्यम्,—

तत एकादिवैद्यैश्च प्रत्याख्यातः परिचारकपरित्यक्तो निर्विण्णौषधभैषज्यः षोडशरोगातङ्कधाऽभिभूतः सन् राज्ये च राष्ट्रे च यावदन्तःपुरे च मूर्च्छितः ४ राज्यं च २ आशासत् प्रार्थयमानः प्रेहमानोऽभिलषमाण आर्तदुःखार्तवशार्त अर्धतृतीयानि वर्षशतानि परमायुः पालयित्वा कालमासे कालं कृत्वाऽस्यां रत्नप्रभायां पृथिव्यामुत्कृष्टसागरोपमस्थितिकेषु नैरयिकेषु नैरयिकतयोपपन्नः। स ततोऽनन्तरमुद्वृत्त्येहैव मृगाग्रामे नगरे विजयस्य क्षत्रियस्य मृगाया देव्याः कुक्षौ पुत्रतयोपपन्नः। ततस्तस्या मृगाया देव्या. शरीरे वेदना प्रादुर्भूतोज्ज्वला यावज्ज्वलन्ती।

जप्पभिंतिं च णं मियापुत्ते दारए मियाए देवीए कुच्छिसि गब्भत्ताए उववण्णे, तप्पभितिं च णं मियादेवी विजयस्स खत्तियस्स अणिट्ठा अकंता अप्पिया अमणुण्णा अमणामा जाया यावि होत्था। तते णं तीसे मियाए देवीए अण्णया कयाइ पुव्वरत्तावरत्तकालसमयंसि कुडुंबजागरियाए जागरमाणीए इमे एयारूवे अज्झत्थिते समुप्पण्णे;—'एवं खलु अहं विजयस्स खत्तियस्स पुव्विं इट्ठा ६ धेज्जा वेसासिया अणुमया आसि;

"विउला कक्कसा पगाढा चंडा दुहा तिव्वा दुरहियासा" इति, एकार्था एव। 'अणिट्ठा अकंता अप्पिया अमणुन्ना अमणामा' एतेऽपि तथैव। 'पुव्वरत्तावरत्तकालसमयंसि' त्ति पूर्वरात्रो रात्रेः पूर्वभागः, अपररात्रो रात्रेः पश्चिमो भागस्तल्लक्षणो यः कालसमयः कालरूपः समयः स तथा तत्र। 'कुडुंबजागरियाए' त्ति कुटुम्बचिन्तयैत्यर्थः। 'अज्झत्थिए' त्ति आध्यात्मिक आत्मविषयः। इहान्यान्यपि पदानि दृश्यानि, तद्यथा,—'चिंतिए' त्ति स्मृतिरूपः, कप्पिए' त्ति बुद्ध्या व्यवस्थापितः, 'पत्थिए' त्ति प्रार्थितः प्रार्थनारूपः, 'मणोगए' त्ति मनस्येव वृत्तो बहिरप्रकाशितः, संकल्पः पर्यालोचः। 'इट्ठा' इत्यादीनि पञ्चैकार्थिकानि प्राग्वत्। 'धेज्ज' त्ति ध्येया। 'वेसासिय' त्ति विश्वसनीया। 'अणुमय' त्ति विप्रियदर्शनस्य पश्चादपि मताऽनुमतेति।

यत्प्रभृति च मृगापुत्रो दारको मृगाया देव्याः कुक्षौ गर्भतयोपपन्नः, तत्प्रभृति च मृगादेवी विजयस्य क्षत्रियस्यानिष्टाऽकान्ताऽप्रियाऽमनोज्ञाऽमनआपा जाता चाप्यभवत्। ततस्तस्या मृगाया देव्या अन्यदा कदाचित्पूर्वरात्रापररात्रकालसमये कुटुम्बजागर्यया जाग्रत्या अयमेतद्रूप आध्यात्मिकः ५ समुत्पन्नः,—'एवं खल्वहं विजयस्य क्षत्रियस्य पूर्वमिष्टा ५ ध्येया, विश्वाऽनुमताऽऽसम्;

जप्पभितिं च णं मम इमे गब्भे कुच्छिसि गब्भत्ताए उववन्ने, तप्पभितिं च णं विजयस्स खत्तियस्स अहं अणिट्ठा जाव अमणामा जाया यावि होत्था, नेच्छति णं विजए खत्तिए मम नामं वा गोत्तं वा गिण्हित्तते, किमंगं पुण दंसणं वा परिभोगं वा!। तं सेयं खलु ममं एयं गब्भं बहूहिं गब्भसाडणाहि य पाडणाहि य गालणाहि य मारणाहि य साडेत्तए वा ४ एवं संपेहेति २ बहूणि खराणि य कडुयाणि य तूवराणि य गब्भसाडणाणि य खायमाणी य पियमाणी य इच्छति तं गब्भं साडित्तए वा ४, नो चेव णं से गब्भे सडई वा ४। तते णं सा मियादेवी जाहे नो संचाएति तं गब्भं साडित्तए वा ४ ताहे संता तंता परितंता अकामिया असयंवसा तं

'नामं' ति पारिभाषिकी संज्ञा। 'गोयं' ति गोत्रम्, आन्वर्थिकी संज्ञैवेति। 'किमंग पुण' त्ति किं पुनः 'अंग' इत्यामन्त्रणे। 'गब्भसाडणाहि य' त्ति शातना गर्भस्य खण्डशो भवनेन पतनहेतवः। 'पाडणाहि य' त्ति पातना, यैरुपायैरखण्ड एव गर्भः पतति। 'गालणाहि य' त्ति यैर्गर्भो द्रवीभूय क्षरति। 'मारणाहि य' त्ति मरणहेतवः। 'अकामिय' त्ति निरभिलाषाः। 'असयंवस' त्ति अस्वयंवशा।

यत्प्रभृति च ममायं गर्भः कुक्षौ गर्भतयोपपन्नः, तत्प्रभृति च विजयस्य क्षत्रियस्याहमनिष्टा यावदमनआपा जाता चाप्यभवम्, नेच्छति विजयः क्षत्रियो मम नाम वा गोत्रं वा ग्रहीतुम्, किमङ्ग पुनर्दर्शनं वा परिभोगं वा, तत् श्रेयः खलु ममैनं गर्भं बहुभिर्गर्भशाटनाभिश्च पातनाभिश्च गालनाभिश्च मारणाभि शाटयितुं वा ४'। एवं संप्रेहते, सम्प्रेक्ष्य बहूनि क्षाराणि च कटुकानि च तूवराणि च गर्भशाटनानि च ४ खादन्ती च पिबन्ती चेच्छति तं गर्भं शाटयितुं वा ४, नो चैव स गर्भः शटति वा ४। ततः सा मृगादेवी यदा नो संशक्नोति तं गर्भं शाटयितुं वा

गब्भं दुहंदुहेणं परिवहाति। तस्स णं दारगस्स गब्भगयस्स चेव अट्ठ णालीओ अब्भंतरप्पवहाओ, अट्ठ ना-
लीओ बाहिरप्पवहाओ, अट्ठ पूयप्पवहाओ, अट्ठ सोणियप्पवहाओ, दुवे दुवे कण्णंतरेसु, दुवे २ अच्छिंतरेसु,
दुवे २ नक्कंतरेसु दुवे २ धमणिअंतरेसु आभिक्खणं २ पूयं च सोणियं च परिस्सवमाणीओ २ चेव चिट्ठंति।
तस्स णं दारगस्स गब्भगयस्स चेव अग्गिए नामं वाही पाउब्भूते। जे णं से दारए आहारेति से णं खिप्पा-
मेव विद्धंसमागच्छाति, पूयत्ताए य सोणियत्ताए य परिणमति। तंपि य से पूयं च सोणियं च आहारेति।

अट्ठ नालीउ' त्ति अष्टौ नाडयः शिराः। 'अब्भंतरप्पवहाउ' त्ति शरीरस्याभ्यन्तर एव रुधिरादि स्रवन्ति यास्तास्तथोच्यन्ते।
'बाहिरप्पवहाउ' त्ति शरीराद् बहिः पूयादि क्षरन्ति यास्तास्तथोक्ताः। एता एव षोडश विभज्यन्ते–अट्ठेत्यादि। कथमित्याह–
'दुवे दुवे' त्ति द्वे पूयप्रवहे द्वे च शोणितप्रवहे। ते च क्वेत्याह 'कण्णंतरेसु' श्रोत्ररन्ध्रयोः, एवमेताश्चतस्रः, एवमन्या अपि
व्याख्येयाः, नवरं धमन्यः कोष्ठकहड्डान्तराणि। 'अग्गिए' त्ति अग्निको भस्मकाभिधानो वायुविकारः।

४, तदा श्रान्ता तान्ता परितान्ताऽकामाऽस्वयंवशा तं गर्भं दुःखदुःखेन परिवहति। तस्य दारकस्य गर्भगतस्यैवाष्ट नाड्योऽभ्यन्तरप्रवहाः,
अष्ट नाड्यो बहिष्प्रवहाः, अष्ट पूयप्रवहाः, अष्ट शोणितप्रवहाः, द्वे द्वे कर्णान्तरयोः, द्वे २ अक्ष्यन्तरयोः, द्वे २ नासान्तरयोः, द्वे धमन्य-
न्तरयोरभीक्ष्णं २ पूयं च शोणितं परिस्रवन्त्यः २ तिष्ठन्ति। तस्य दारकस्य गर्भगतस्यैवाग्निको नाम व्याधिः प्रादुर्भूतः। यत् स दारक
आहरति तत्क्षिप्रमेव विध्वंसमागच्छति, पूयतया शोणिततया च परिणमति। तदपि च स पूयं च शोणितं चाहरति।

तगत्तं करेति करेत्ता अवओडगवंधणं करेति। करेत्ता एएणं विहाणेणं वज्झं आणवेति। एवं खलु गोतमा ! उज्झियए दारए पुरा पोराणाणं कम्माणं जाव पच्चणुभवमाणे विहरति॥ ( सू० १३ )

उज्झियए णं भंते ! दारए इओ कालमासे कालं किच्चा कहिं गच्छिहिति ? कहिं उववज्जिहिति ?, गोतमा ! उज्झियए दारए पणवीसं वासाइं परमाउं पालइत्ता अज्जेव तिभागावसेसे दिवसे सूलीभिण्णे कए समाणे कालमाणे कालं किच्चा इमीसे रयणप्पभाए पुढवीए णेरइयत्ताए उववज्जिहिति। से णं ततो अणंतरं उवट्टित्ता इहेव जंबुद्दीवे २ भारहे वासे वेयड्ढगिरिपायमूले वानरकुलंसि वाणरत्ताए उववज्जिहिति,

लोचनविकारविशेषं ललाटे संहृत्य-विधायेति। 'अवओडगवंधणं'ति, अवकोटनेन च ग्रीवायाः पश्चाद्भागनयनेन बन्धनं यस्य स तथा तम्। 'पुरा पोराणाणं', इत्यत्र यावत्करणाद् 'दुच्चिन्नाणं दुप्पडिकंताणं' इत्यादि दृश्यम्।

एवं खलु गौतम ! उज्झितको दारक पुरा पुराणानां कर्मणां यावत् प्रत्यनुभवन् विहरति।'

'उज्झितको भदन्त ! दारक इतः कालमासे कालं कृत्वा कुत्र गमिष्यति ? कुत्रोपपत्स्यते ?' 'गौतम ! उज्झितको दारकः पञ्चविंशतिं वर्षाणि परमायुः पालयित्वाऽद्यैव त्रिभागावशेषे दिवसे शूलभिन्नः कृतः सन् कालमासे कालं कृत्वाऽस्यां रत्नप्रभायां पृथिव्यां नैरयिकतयोपपत्स्यते। स ततोऽनन्तरमुद्वृत्त्येहैव जम्बूद्वीपे द्वीपे भारते वर्षे वैताढ्यगिरिपादमूले वानरकुले वानरतयोपपत्स्यते। स तत्रोन्मुक्तबाल-

से णं तत्थ उम्मुक्कबालभावे तिरियभोएसु मुच्छिते गिद्धे गढिते अज्झोववण्णे जाते जाते वानरपेल्लए वहेहिति । तं एयकम्मे ४ कालमासे कालं किच्चा इहेव जंबुद्दीवे २ भारहे वासे इंदपुरे नयरे गणियाकुलंसि पुत्तत्ताए पच्चायाहिति। तते णं तं दारयं अम्मापितरो जायमेत्तकं वद्धेहिंति २ नपुंसगकम्मं सिक्खावेहिंति । तते णं तस्स दारगस्स अम्मापितरो णिवत्तबारसाहस्स इमं एयारूवं णामधेज्जं करेहिंति, होउ णं पियसेणे णामं णपुंसए । तते णं से पियसेणे णपुंसते उम्मुक्कबालभावे जोव्वणगमणुप्पत्ते विण्णायपरिणयमेत्ते रूवेण य जोव्वणेण य लावण्णेण य उक्किट्ठे उक्किट्ठसरीरे भविस्सति, तते णं से पियसेणे

'वानरपेल्लए'त्ति, वानरडिम्भान्। 'तं एयकम्मे'त्ति, तदिति तस्मात्, एतत्कर्मा, इहेदमपरं दृश्यम्,—'एयप्पहाणे एयविज्जे एयसमुदायारेत्ति' 'वद्धेहिंति'त्ति वार्धितकं करिष्यतः। 'उक्किट्ठे'त्ति, उत्कर्षवान्, किमुक्तं भवति ? 'उक्किट्ठसरीरे'त्ति, विद्यामन्त्रचूर्णप्रयोगैः,

भावस्तिर्यग्भोगेषु मूर्च्छितो गृद्धो ग्रथितोऽध्युपपन्नो जातान् जातान् वानरडिम्भान् हनिष्यति । तद् एतत्कर्मा ४ कालमासे कालं कृत्वेहैव जम्बूद्वीपे द्वीपे भारते वर्षे इन्द्रपुरे नगरे गणिकाकुले पुत्रतया प्रत्यायास्यति। ततस्तं दारकमम्बापितरौ जातमात्रकं वर्धयिष्यतः, वर्धयित्वा नपुंसककर्म शिक्षयिष्यतः । ततस्तस्य दारकस्याम्बापितरौ निर्वृत्तद्वादशाह इदमेतद्रूपं नामधेयं करिष्यतः, भवतु प्रियसेनो नाम नपुंसकः । ततः स प्रियसेनो नपुंसक उन्मुक्तबालभावो यौवनमनुप्राप्तो विज्ञानपरिणतमात्रो रूपेण च यौवनेन च लावण्येन चोत्कृष्ट उत्कृष्टशरीरो भविष्यति ।

णपुंसए इंदपुरे णगरे बहवे राईसर० जाव पभिइओ बहूहिं विज्जापओगेहि य मंतचुण्णेहि य हियउड्डावणेहि य निण्हवणेहि य पण्हवणेहि य वसीकरणेहि य आभिओगिएहि य अभिओगित्ता उरालाइं माणुस्सयाइं भोगभोगाइं भुंजमाणे विहरिस्सति। तते णं से पियसेणे णपुंसए एयकम्मे ४ सुबहुं पावं कम्मं समज्जिणित्ता एक्कवीसं वाससयं परमाउं पालयित्ता कालमासे कालं किच्चा इमीसे रयणप्पहाए पुढवीए णेरइयत्ताते उववज्जिहिति, ततो सिरीसिवेसु सुंसुमारे संसारो तहेव जहा पढमो जाव पुढवी०।

किंविधैः इत्याह—'हियउड्डावणेहि य'त्ति, हृदयोड्डाययनैः शून्यचित्त(त्ता)कारकैः 'निण्हवणेहि य'त्ति अदृश्यताकारकैः; किमुक्तं भवति?—अपहृतधनादिरपि परो धनापहारादिकं यैरपह्नुते—न प्रकाशयति तदपह्नवता (तेऽह्नवनाः,) अतस्तैः। 'पण्हवणेहि य'त्ति, प्रस्नवनैर्यैः परः प्रस्तुतिं भजते प्रह्नो भवतीत्यर्थः, 'वसीकरणेहि य'त्ति, वश्यताकारकैः; किमुक्तं भवति?—'आभिओगिएहि'त्ति, अभियोगः पारवश्यं स प्रयोजनं येषां ते आभियोगिका अतस्तैः अभियोगश्च द्वेधा, यदाह,—"दुविहो खलु अभिओगो दव्वे भावे

ततः स प्रियसेनो नपुंसक इन्द्रपुरे नगरे बहून् राजेश्वर० यावत् ०प्रभृतीन् बहुभिश्च विद्याप्रयोगैश्च मन्त्रचूर्णैश्च हृदयोड्डायनैश्च निह्नवनैश्च प्रस्नवनैश्च वशीकरणैश्चाभियोगिकैश्चाभियोज्योदारान् मानुष्यकान् भोगभोगान् भुञ्जानो विहरिष्यति। ततः स प्रियसेनो नपुंसक एतत्कर्मा ४ सुबहु पापं कर्म समर्ज्यैकविंशं वर्षशतं परमायुः पालयित्वा कालमासे कालं कृत्वाऽस्यां रत्नप्रभायां पृथिव्यां नैरयिकतयोपपत्स्यते। ततः सरीसृपेषु, सुंसुमारे ससारस्तथैव यथा प्रथमो यावत् पृथिवी०।

से णं तओ अणंतरं उवट्टित्ता इहेव जंबुद्दीवे दीवे भारहे वासे चंपाए नयरीए महिसत्ताए पच्चायाहिति से णं तत्थ अण्णया कयाति गोट्ठिल्लिएहिं जीवियाओ ववरोविए समाणे तत्थेव चंपाए नयरीए सेट्ठि-कुलंसि पुत्तत्ताए पच्चायाहिति । से णं तत्थ उम्मुक्कबालभावे तहारूवाणं थेराणं अंतिते केवलं बोहिं० अणगारे० सोहम्मे कप्पे० जहा पढमे जाव अंतं काहित्ति निक्खेवो । ( सू० १४ )

॥ बितियं अज्झयणं समत्तं ॥

स होइ नायव्वो । दव्वम्मि होंति जोगा विज्जा मंता य भावम्मि ॥ १ 'अभिओगित्त'त्ति वशीकृत्य ।

'निक्खेवो'त्ति निगमनं वाच्यम्, तद्यथा,–''एवं खलु जंबू ! समणेणं भगवया महा० जाव संपत्तेणं दुहविवागाणं विइयस्स अज्झयणस्स अयमट्ठे पण्णत्तेत्ति बेमि' । अत्र च इतिशब्दः समाप्तौ, 'बेमि' इति च ब्रवीम्यहं भगवत उपश्रुत्य न यथाकथंचित् ॥

॥ इति विपाकश्रुते द्वितीयाध्ययनविवरणम् ॥

स ततोऽनन्तरमुद्वृत्त्येहैव जम्बूद्वीपे द्वीपे भारते वर्षे चम्पायां नगर्यां महिषतया प्रत्यायास्यति। स तत्रान्यदा कदाचिद् गौष्ठिकैर्जीविताद् व्यप-रोपितः संस्तत्रैव चम्पायां नगर्यां श्रेष्ठिकुले पुत्रतया प्रत्यायास्यति । स तत्रोन्मुक्तबालभावस्तथारूपाणां स्थविराणामन्तिके केवलं० बोहि० अनगार० सौधर्मे कल्पे० यथा प्रथमो यावदन्तं करिष्यतीति निक्षेपः । '

॥ द्वितीयमध्ययनं समाप्तम् ॥

# अथ तृतीयमभग्नसेनाध्ययनम्।

तच्चस्स उक्खेवो एवं खलु जंबू! तेणं कालेणं तेणं समएणं पुरिमताले णामं णगरे होत्था, रिद्ध०, तस्स णं पुरिमतालस्स नगरस्स उत्तरपुरत्थि(च्छि)मे दिसीभाए एत्थ णं अमोहदंसी उज्जाणे, तत्थ णं अमोहदंसिस्स जक्खस्स आययणे होत्था, तत्थ णं पुरिमताले महब्बले णामं राया होत्था, तस्स णं पुरिमतालस्स णगरस्स उत्तरपुरत्थिमे दिसीभाए देसप्पंते अडवीसंठिया एत्थ णं सालाडवी णामं चोरपल्ली होत्था विसम-

---

अथ तृतीये किञ्चिल्लिख्यते–'तच्चस्स उक्खेवो'त्ति, तृतीयाध्ययनस्योत्क्षेपः प्रस्तावना वाच्या, सा चैवम्,-"जइ णं भंते समणेणं भगवया जाव संपत्तेणं दुहविवागाणं दोच्चस्स अज्झयणस्स अयमट्ठे पण्णत्ते, तच्चस्स णं भंते! के अट्ठे पण्णत्ते?' 'एवं खलु'त्ति एवं वक्ष्यमाणप्रकारेणार्थः प्रज्ञप्तः, खलु–वाक्यालङ्कारे, 'जंबु'त्ति, आमन्त्रणम्। 'देसप्पंते'त्ति, मण्डलप्रान्ते, 'विसमगिरिकंदरकोलंबसण्णिविट्ठा' विषमं यद्गिरेः कन्दरं कुहरं तस्य यः कोलम्बः प्रान्तस्तत्र संनिविष्टा संनिवेशिता या सा तथा, कोलम्बो हि लोकेऽवनतं वृक्षशाखाग्रमुच्यते,

---

तृतीयस्योत्क्षेपः। एवं खलु जम्बो! तस्मिन् काले तस्मिन् समये पुरिमतालं नाम नगरमभवद् ऋद्ध०। तस्य पुरिमतालस्य नगरस्योत्तरपौरस्त्ये दिग्भागेऽत्रामोघदर्श्युद्यानम्। तत्रामोघदर्शिनो यक्षस्यायतनमभवत्। तत्र पुरिमताले महाबलो नाम राजाऽभूत्। तस्य पुरिमतालस्य नगरस्योत्तरपौरस्त्ये दिग्भागे देशप्रान्तेऽटवीसश्रिताऽत्र शालाटवी नाम चौरपल्ल्यभवद् विषमगिरिकन्दरकोलम्बसंनिविष्टा

गिरिकंदरकोलंबसण्णिविट्ठा वंसीकलंकपागारपरिक्खित्ता छिण्णसेलविसमप्पवायफरिहोवगूढा अब्भिंतरपाणीया सुदुल्लभजलपेरंता अणेगखंडीविदितजणादिण्णनिग्गमप्पवेसा सुबहुयस्सावि कूवियस्स जणस्स दुप्पहंसा यावि होत्था, तत्थ णं सालाडवीए चोरपल्लीए विजए णामं चोरसेणावती परिवसति, अहम्मिए

इहोपचारतः कन्दरप्रान्तः कोलम्बो व्याख्यातः। 'वंसीकलंकपागारपरिक्खित्ता' वंशीकलङ्का वंशजालीमया वृत्तिः सैव प्राकारस्तेन परिक्षिप्ता वेष्टिता या सा तथा, 'छिण्णसेलविसमप्पवायफरिहोवगूढा' छिन्नो-विभक्तोऽवयवान्तरापेक्षया यः शैलस्तस्य संबन्धिनो ये विषमाः प्रपाता-गर्त्तास्त एव परिखा तयोपगूढा-वेष्टिता या सा तथा, 'अब्भिंतरपाणीय'त्ति, व्यक्तम्, 'सुदुल्लभजलपेरन्ता' सुष्ठु दुर्लभं जलं पर्यन्तेषु यस्याः सा तथा। 'अणेगखंडी' अनेका नश्यतां नराणां मार्गभूताः खण्डयोऽपद्वाराणि यस्यां साऽनेकखण्डीति। 'विदियजणदिन्ननिग्गमप्पवेसा' विदितानामेव प्रत्यभिज्ञातानां जनानां दत्तो निर्गमः प्रवेशश्च यस्यां सा तथा, 'सुबहुयस्सवि कूवियजणस्स दुप्पहंसा यावि होत्थ'त्ति सुबहोरपि (कूवियजणस्स'त्ति) मोपव्यावर्तकलोकस्य दुष्प्रध्वस्या चाप्यभवत्, 'अहम्मिए'त्ति, अधर्मेण चरतीत्यधार्मिकः; यावत्करणात् "अधम्मिट्ठे" अतिशयेन निर्धर्मः अधर्मिष्ठः, निस्त्रिंशकर्मकारित्वात्, "अधम्मक्खाई" अधर्ममाख्यातुं शीलं यस्य स तथा, "अधम्माणुए" अधर्मकर्तव्येऽनुज्ञाऽमोदनं यस्यासावधर्मानुज्ञः, अधर्मानुगो वा, 'अध-

वशीकलङ्कप्राकारपरिक्षिप्ता छिन्नशैलविषमप्रपातपरिखोपगूढाऽभ्यन्तरपानीया सुदुर्लभजलपर्य्यन्ताऽनेकखण्डी विदितजनदत्तनिर्गमप्रवेशा सुबहोरपि मोपव्यावर्त्तकजनस्य दुष्प्रध्वस्या चाप्यभवत्। तत्र शालाटव्यां चोरपल्ल्या विजयो नाम चोरसेनापतिः परिवसत्यधार्मिको यावल्लो-

जाव(हण०) लोहियपाणी बहुणगरणिग्गतजसे सूरे दढप्पहारे साहसिते सद्दवेही ( परिवसइ अहम्मिए० ) असिलट्ठिपढममल्ले। से णं तत्थ सालाडवीए चोरपल्लीए पंचण्हं चोरसताणं आहेवच्चं० जाव

म्मप्पलोई' अधर्ममेव प्रलोकयितुं शीलं यस्यासावधर्मप्रलोकी, 'अधम्मपलज्जणे' 'अधर्म्मप्रायेषु कर्मसु प्रकर्षेण रज्यत इत्यधर्मप्ररजनः, रलयोरैक्यमिति कृत्वा रस्य स्थाने लकारः, 'अधम्मसीलसमुदायारे' अधर्म एव शीलं-स्वभावः समुदाचारश्च यत्किंचनानुष्ठानं यस्य स तथा 'अधम्मेण चेव वित्तिं कप्पेमाणे विहरइ अधर्मेण पापेन सावद्यानुष्ठानेनैव दहनाङ्कननिर्लाञ्छनादिना कर्मणा 'वृत्तिं' वर्तनां कल्पयन् कुर्वाणो विहरतीति आस्ते स्म, 'हणछिंदभिंदवियत्तए' हन=विनाशय, छिन्धि=द्विधाकुरु, भिन्द=कुन्तादिना भेदं विधेहीत्येवं परानपि प्रेरयन् प्राणिनो विकृन्ततीति हनच्छिन्दभिन्दविकर्त्तकः, हनेत्यादयः शब्दाः संस्कृतेऽपि न विरुद्धाः, अनुकरणरूपत्वादेषाम्। 'लोहियपाणी' प्राणिविकर्तनेन लोहितौ रक्तरक्ततया पाणी हस्तौ यस्य स तथा। 'बहुणगरणिग्गयजसे' बहुषु नगरेषु निर्गतं-विश्रुतं यशो यस्य स तथा, इतो विशेषणचतुष्कं व्यक्तम्। 'असिलट्ठिपढममल्ले' असियष्टिः खड्गलता तस्यां प्रथम-आद्यः प्रधान इत्यर्थः मल्लो-योद्धा यः स तथा। 'आहेवच्चं'ति, अधिपतिकर्म, यावत्करणात् "पोरेवच्चं सामित्तं भट्टित्तं महत्तरगतं आणाईसरसेणावच्चं इति दृश्यम्, व्याख्या च पूर्ववत्। गंठिभेयगाण य'त्ति घुर्घुरादिना ये ग्रन्थीश्छिन्दन्ति ते ग्रन्थिभेदकाः, 'संधिछेयगाण य'त्ति, ये भित्तिसन्धीन् भिन्दन्ति ते संधिच्छेदकाः, 'खंडपट्टाण य'त्ति, खण्डो-अपरिपूर्णः पट्टः-परिधानपट्टो येषां,

हितपाणिर्बहुनगरनिर्गतयशाः शूरो दृढप्रहारः साहसिकः शब्दवेधी ( परिवसति अधार्मिकः ) असियष्टिप्रथममल्लः। स तत्र शालाटव्यां

विहरति (सू० १५)। तते णं से विजए चोरसेणावती बहूणं चोराण य पारदारियाण य गंठिभेयगाण य संधिछेयगाण य खंडपट्टाण य अण्णेसि च बहूणं छिण्णभिण्णबाहिराहियाणं कूडंगे यावि होत्था, तते णं से विजए चोरसेणावई पुरिमतालस्स णगरस्स उत्तरपुरत्थि(च्छि)मिल्लं जणवयं बहूहिं गामघातेहि य य नगरघातेहि गोग्गहणेहि य बंदिग्गहणेहि य पंथकोट्टेहि य खत्तखणणेहि य ओवीलेमाणे २ विहम्मे(द्धंसे)माणे २ तज्जेमाणे २ तालेमाणे २ नित्थाणे निद्धणे निक्कणे कप्पायं करेमाणे विहरति, महब्बलस्स रण्णो

मद्यद्यूतादिव्यसनाभिभूततया परिपूर्णपरिधानाप्राप्तेः ते खण्डपट्टा—द्यूतकारादयः, "अन्यायव्यवहारिणः" इत्यन्ये, "धूर्त्ताः" इत्यपरे, "खंडिपाडयाणं" इति क्वचिदिति। 'छिन्नभिन्नबाहिराहियाणं' ति छिन्ना हस्तादिषु, भिन्ना नासिकादिषु 'बाहिराहिय'त्ति नगरादेर्बाह्याः कृताः, अथवा 'बाहिर'त्ति बाह्याः स्वाचारपरिभ्रंशाद्विशिष्टजनबहिर्वर्तिनः 'अहिय'त्ति अहिता ग्रामादिदाहकत्वात्, अतो द्वन्द्वः, ततस्तेषां 'कुडंगे'त्ति, 'कुडङ्गं वंशादिगहनं तद्वद् यो दुर्गमत्वेन रक्षणार्थमाश्रयणीयत्वसाधर्म्यात् स तथा। 'ओवीलेमाणे'त्ति, उपपीडयन्'। 'विहम्मेमाणे'त्ति विधर्मयन् विगतधर्मं कुर्वन्, अर्थापहारे हि दानादिधर्माभावः स्यादेवेति। 'तज्जेमाणे' त्ति,

चोरपल्ल्यां पञ्चानां चौरशतानामाधिपत्यं० यावद् विहरति। ततः स विजयश्चोरसेनापतिर्बहूनां चोराणां च पारदारिकाणा च ग्रन्थिभेदकानां च सधिच्छेदकानां च खण्डपट्टानां चान्येषां च बहूनां छिन्नभिन्नबहिष्कृतानां कुडङ्गं चाप्यभवत्। तत स विजयश्चोरसेनापतिः पुरिमतालस्य नगरस्योत्तरपौरस्त्यं जनपदं बहुभिर्ग्रामघातैश्च नगरघातैश्च गोग्रहणैश्च वन्दिग्रहणैश्च सार्थघातैश्च खनित्रखननैश्चोत्पीडयन् २

अभिक्खणं २ कप्पायं गेण्हति । तस्स णं विजयस्स चोरसेणावइस्स खंदसिरी णामं भारिया होत्था अहीण० । तस्स णं विजयचोरसेणावइस्स पुत्ते खंदसिरीए भारियाए अत्तए अभग्गसेणे नामं दारए होत्था अहीण० ( पुन्नपंचेंदियसरीरे विण्णायपरिणयमित्ते जोव्वणगमणुपत्ते । )

तेणं कालेणं तेणं समएणं समणे भगवं० पुरिमतालनगरे समोसढे, परिसा निग्गया, राया निग्गओ, धम्मो कहिओ, परिसा राया य पडिगओ । तेणं कालेणं तेणं समएणं समणस्स भगवओ

---

तर्जयन् 'ज्ञास्यसि रे' ! इत्यादिभणनतः । 'तालेमाणे'त्ति, ताडयन् कषादिघातैः 'नित्थाणे'त्ति, प्राकृतत्वाद् निःस्थानं-स्थानवर्जितम् 'निद्धणे'त्ति निर्द्धनं गोमहिष्यादिरहितम्, कुर्वन्निति । 'कप्पायं'ति कल्प-उचितो य आयः प्रजातो द्रव्यलाभः स कल्पायोऽस्तम् । 'अहीण' इत्यत्र 'अहीणपुण्णपंचिंदियसरीरा लक्खणवंजणगुणोववेया' इत्यादि द्रष्टव्यम् । 'अवओडय' इत्यत्र यावत्करणात् 'अवओडगबंधणबद्धं उक्खत्तकन्ननासं नेहतुप्पियगत्तं' इत्यादि द्रष्टव्यम्, व्याख्या च प्राग्वदिति । 'पढमंमि चच्चरंसि'ति, प्रथमे

---

विधर्मयन् २ तर्जयन् २ ताडयन् २ निःस्थानान् निर्धनान् निष्कणान् ( कल्पाय ) कुर्वाणो विहरति । महाबलस्य राज्ञोऽभीक्ष्णं कल्पायं गृह्णाति । तस्य विजयस्य चोरसेनापतेः स्कन्दश्रीर्नाम भार्याऽभवदहीन० । तस्य विजयचोरसेनापतेः पुत्रः स्कन्दश्रिय भार्याया आत्मजोऽभग्नसेनो नाम दारकोऽभवदहीन०—( पूर्णपञ्चेन्द्रियशरीरो विज्ञातपरिणतमात्रयौवनमनुप्राप्तः ) ।

तस्मिन् काले तस्मिन् समये श्रमणो भगवान्०पुरिमताले नगरे समवसृतः । परिषद् निर्गता राजा निर्गतः । धर्मः कथितः । परिषद् राजा च

महावीरस्स जेट्ठे अंतेवासी गोयमे जाव रायमग्गं समोगाढे, तत्थ णं बहवे हत्थी पासति, बहवे आसे पुरिसे सण्णद्धबद्धकवए, तेसिं णं पुरिसाणं मज्झगतं एगं पुरिसं पासति अवओडय० जाव उग्घोसेज्जमाणं। तते णं तं पुरिसं रायपुरिसा पढमंसि चच्चरंसि निसियावेंति २, अट्ठ चुल्लपिउए अग्गओ घाएंति २ कसप्पहारेहिं तालेमाणा २ कलुणं काकणिमंसाइं खावेंति (खावित्ता) रुहिरपाणं च पाएंति। तदाणंतरं च णं दोच्चंसि चच्चरंसि अट्ठ चुल्लमाउयाओ अग्गओ घाएंति २। एवं तच्चे चच्चरे अट्ठ महा-

चर्चरे—स्थानविशेषे 'निसियावेंति'त्ति, निवेशयन्ति, 'अट्ठ चुल्लपिउए'त्ति, अष्टौ लघुपितॄन्, पितुर्लघुभ्रातॄनित्यर्थः। 'कलुणंति करुणं—करुणास्पदं तं पुरुषं, क्रियाविशेषणं-चेदम्,—'काकणिमंसाइं'ति, मांसश्लक्ष्णखण्डानि। 'दोच्चंसि चच्चरंसि'त्ति, द्वितीये चर्चरे। 'चुल्लमाउयाउ'त्ति, पितृलघुभ्रातृजायाः, अथवा मातुर्लघुसपत्नीः। एवं 'तच्च'त्ति, तृतीये चर्चरे। 'अट्ठ महापिउए'त्ति, अष्टौ महापितॄन् पितुर्ज्येष्ठभ्रातॄन्, एवं यावत् करणात् 'अग्गउ घाएंति' इति वाच्यम्। 'चउत्थि'त्ति चतुर्थे चत्वरे। 'अट्ठ महामाउयाउ'त्ति

प्रतिगतः। तस्मिन् काले तस्मिन् समये श्रमणस्य भगवतो महावीरस्य ज्येष्ठोऽन्तेवासी गौतमो यावद् राजमार्गं समवगाढः। तत्र बहून् हस्तिनः पश्यति, बहूनश्वान्, पुरुषान्, सन्नद्धबद्धकवचान्। तेषां पुरुषाणां मध्यगतमेकं पुरुषं पश्यति अवकोटक० यावदुद्घोष्यमाणम्। ततस्तं पुरुष राजपुरुषाः प्रथमे चत्वरे निपादयन्ति, निपाद्याष्टौ क्षुद्रपितॄनग्रतो घातयन्ति घातयित्वा कषप्रहारैस्ताड्यमानाः करुणं काकणिमांसंस्वादयन्ति, रुधिरपानं च पाययन्ति। तदनन्तरं च द्वितीये चत्वरेऽष्टक्षुद्रमातॄरग्रतो घातयन्ति २। एवं तृतीये चत्वरेऽष्ट महापितॄन्। चतुर्थेऽष्ट-

पिउए, चउत्थे अट्ठ महामाउयाओ, पंचमे पुत्ते, छट्ठे सुण्हाओ, सत्तमे जामाउया, अट्ठमे धूयाओ, णवमे णत्तुया, दसमे णत्तुईओ, एक्कारसमे णत्तुयावई, बारसमे णत्तुइणीओ, तेरसमे पिउस्सियपतिया, चोद्द-समे पिउस्सियाओ, पण्णरसमे माउसियापतिया, सोलसमे माउस्सियाओ, सत्तरसमे मामियाओ, अट्ठारसमे अवसेसं मित्तनाइनियगसयणसंबंधिपरियणं अग्गओ घातेंति २ त्ता कसप्पहारेहिं तालेमाणे

पितुर्ज्येष्ठभ्रातृजायाः, अथवा मातुर्ज्येष्ठाः सपत्नीः, पञ्चमे चत्वरे पुत्रानग्रतो घातयन्ति, षष्ठे स्नुषा–वधूः। सप्तमे 'जामातृकान्'-दुहितुर्भर्तॄन्, अष्टमे 'धूयाउ' त्ति, दुहितॄः नवमे 'नत्तुय' त्ति, नप्तॄन् पौत्रान् दौहित्रान् वा, दशमे 'नत्तुईउ' त्ति नप्तॄः पौत्रीर्दौहित्रीर्वा, एकादशे 'नत्तुयावइ' त्ति नप्तृकापतीन् पौत्रीणां दौहित्रीणां वा भर्तॄन्। द्वादशे 'नत्तुइणीउ' त्ति नप्तृ-किनीः पौत्रदौहित्रभार्याः। त्रयोदशे 'पिउस्सियपइय' त्ति पितृष्वसृपतिकान्, तत्र पितुः स्वसारो भगिन्यस्तासां पतय एव पतिका भर्त्तारः। चतुर्दशे 'पिउस्सियाउ'त्ति पितृस्वसृः–जनकभगिनीः, पञ्चदशे 'माउस्सियापइय'त्ति, मातृष्वसृपतिकान्, जननीभगिनी-भर्त्तॄन्, षोडशे 'माउस्सियाउ'त्ति मातृष्वसृः जननीभगिनीः सप्तदशे 'मामियाउ'त्ति, मातुलभार्याः, अष्टादशेऽवशेषं 'मित्तनाइनियग

महामातॄः। पञ्चमे पुत्रान्। षष्ठे स्नुषाः। सप्तमे जामातॄन्। अष्टमे दुहितॄः। नवमे नप्तॄन्। दशमे नप्तॄः। एकादशे नप्तृकापतीन्। द्वादशे नप्तृभार्याः। त्रयोदशे पितृष्वसृपतीन्। चतुर्दशे पितृष्वसृः। पञ्चदशे मातृष्वसृपतीन्। षोडशे मातृस्वसृः। सप्तदशे मातुलानीः। अष्टा-दशेऽवशेषं मित्रज्ञातिनिजकस्वजनसबन्धिपरिजनमग्रतो घातयन्ति, घातयित्वा कषप्रहारैस्ताड्यमानाः २ करुणं काकणिमांसं खादयन्ति,

२ कलुणं काकणिमंसाइं खावेंति, रुहिरपाणं च पाएंति (सू. १६)।

तते णं से भगवं गोतमे तं पुरिसं पासति २ त्ता अयं (इमं) एयारूवे अज्झत्थिए० समुप्पण्णे जाव तहेव णिग्गते एवं वयासी;—एवं खलु अहं भंते! तं चेव जाव से णं भंते! पुरिसे पुव्वभवे के आसी? जाव विहरति।

एवं खलु गोतमा! तेणं कालेणं तेणं समएणं इहेव जंबुद्दीवे २ भारहे वासे पुरिमताले नामं नगरे होत्था, रिद्ध०। तत्थ णं पुरिमताले उदिए नामं राया होत्था, महया०। तत्थ णं पुरिमताले निन्नए नामं अंडयवाणियए होत्था, अड्ढे जाव अपरिभूते, अहम्मिए जाव दुप्पडियाणंदे। तस्स णं णिण्णयस्स

---

सयणसंबंधिपरियणं'ति, मित्राणि सुहृदः, ज्ञातयः समानजातीयाः, निजकाः स्वजनाः मातुलपुत्रादयः, संबन्धिनः—श्वशुरशालादयः, परिजनः—दासीदासादिस्ततो द्वन्द्वः, अतस्तान् (तत्)। (सू० १६)

'अड्ढे' इह यावत्करणाद् 'दित्ते विच्छडियविपुलभत्तपाणे' इत्यादि 'बहुजणस्स अपरिभूए' इत्येतदन्तं दृश्यम्। दिन्नभइभत्तवे-

---

रुधिरपानं च पाययन्ति। ततः स भगवान् गौतमस्त पुरुषं पश्यति दृष्ट्वाऽयमेतद्रूप आध्यात्मिकः० समुत्पन्नो यावत् तथैव निर्गत एवमवदत्,—एवं खल्वहं भदन्त! तदेव यावत् स भदन्त! पुरुषः पूर्वभवे क आसीद् यावद् विहरति?

'एवं खलु गौतम! तस्मिन् काले तस्मिन् समये इहैव जम्बूद्वीपे द्वीपे भारते वर्षे पुरिमतालं नाम नगरमभवद् ऋद्ध० तत्र पुरिमताले उदितो नाम राजाऽभवद् महा० तत्र च पुरिमताले निर्णयो नामाण्डवाणिजोऽभूदाढ्यो यावदपरिभूतः, अधार्मिको यावद् दुष्प्रत्यानन्दः।

अंडयवाणियगस्स बहवे पुरिसा दिण्णभतिभत्तवेयणा कल्लाकल्लिं कोद्दालियाओ य पत्थियापिडए य गेण्हंति, पुरिमतालस्स णगरस्स परिपेरंतेसु बहवे काइअंडए य घूतिअंडए य पारेवइ० टिट्टिभिबगि-मयूरि-कुक्कुडिअंडए य, अण्णेसिं चेव बहूणं जलयर-थलयर-खहयरमाईणं अंडाइं गेण्हंति गेण्हेत्ता पत्थियपिडगाइं भरेंति २ जेणेव निन्नए अंडवाणियए तेणेव उवा० २ निन्नयस्स अंडवाणियगस्स उवणेंति।

तते णं तस्स निन्नयस्स अंडवाणियगस्स बहवे पुरिसा दिण्णभइ० बहवे काइअंडए य जाव कुक्कु-

यण'त्ति, दत्तं, भृतिभक्तरूपं वेतनं मूल्यं येषां ते तथा, तत्र भृतिः–द्रम्मादिवर्त्तनां, भक्तं तु घृतकणादि, 'कल्लाकल्लिं'ति, कल्ये च कल्ये च कल्याकल्यि–अनुदिनमित्यर्थः, 'कुद्दालिका' भूखनित्रविशेषाः । 'पत्थिकापिटकानि' वंशमयभाजनविशेषाः, काकी घूकी टिट्टिभी बकी मयूरी कुक्कुटी च प्रसिद्धाः, अण्डाकानि च प्रतीतान्येवेति ।

तस्य निर्णयस्याण्डवाणिजस्य बहव पुरुषा दत्तभृतिभक्तवेतनाः कल्याकल्यि कुदालिकाश्च पत्थिकापिटकानि च गृह्णन्ति पुरिमतालस्य नगरस्य परि-पर्यन्तेषु । बहवः काक्यण्डानि च घूक्यण्डानि च पारेपती-टिट्टिभी-बकी-मयूरी-कुक्कुट्यण्डानि च, अन्येषां चापि बहूनां जलचर-स्थलच-रखचरादीनामण्डानि गृह्णन्ति । गृहीत्वा पत्थिकापिटकानि भरन्ति, भृत्वा यत्रैव निर्णयोऽण्डवाणिजस्तत्रैवोपागच्छति, उपागत्य निर्ण-यस्याण्डवाणिजस्योपनयन्ति । तततस्य निर्णयस्याण्डवाणिजस्य बहवः पुरुषा दत्तभृति० बहूनि काक्यण्डानि च यावत् कुक्कुट्यण्डानि

डिअंडए य अण्णेसिं च बहूणं जलयरथलयरखहयरमाईणं अंडए तवएसु य कवल्लीसु य कंदूसु य भज्जणएसु य इंगालेसु य तलेंति, भज्जेंति, सोल्लिंति तलेंता भज्जेंता सोल्लंता य रायमग्गे अंतरावणंसि अंडयपणिएणं वित्तिं कप्पेमाणा विहरंति, अप्पणावि य णं से निन्नयए अंडवाणियए तेहिं बहूहिं काइअंडएहि य जाव कुक्कुडिअंडएहि य सोल्लेहिं तलिएहिं भज्जिएहिं सुरं च ५ आसाएमाणे ४ विहरति। तते णं से निन्नए अंडवाणियए एयकम्मे ४ सुबहुं पावं कम्मं समज्जिणित्ता एगं वाससहस्सं परमाउं पालइत्ता कालमासे

---

२ 'तवएसु य'त्ति, तवकानि—सुकुमारिकादितलनभाजनानि 'कवल्लीसु य'त्ति, कवल्यो—गुडादिपाकभाजनानि 'कंदूसु य'त्ति कन्दवो मण्डकादिपचनभाजनानि, 'भज्जणएसु य'त्ति भर्जनकानि कर्पराणि धानापाकभाजनानि, अङ्गाराश्च प्रतीताः, 'तलेंति' अग्नौ स्नेहेन 'भज्जेंति' भृज्जन्ति धानावत् पचन्ति 'सोल्लिंति य'त्ति, ओदनमिव राध्यन्ति, खण्डशो वा कुर्वन्ति, अंतरावणंसि'त्ति, राजमार्गमध्यभागवर्त्तिहट्टे, 'अंडयपणिएणं'ति 'अण्डकपण्येन 'सुरं चे'त्यादि प्राग्वत् ॥

---

चान्येषा च बहूनां जलस्थलखचरादीनामण्डानि तवकेषु च कवल्लीषु च कन्दुषु च भर्जनकेषु चाङ्गारेषु च तलन्ति, भृज्जन्ति, पचन्ति । तलन्तो भृज्जन्तः पचन्तश्च राजमार्गेऽन्तरापणेऽण्डपण्येन वृत्तिं कल्पमाना विहरन्ति । आत्मनापि च स निर्णयोऽण्डवाणिजस्तैर्बहुभिः काक्यण्डैश्च यावत् कुक्कुट्यण्डैश्च पक्वैस्तलितैर्भृष्टैः सुरां च ५ आस्वादयन् ४ विहरति । ततः स निर्णयोऽण्डवाणिज एतत्कर्मा ४ सुबहु पापकर्म्म समर्ज्यैकं वर्षसहस्रं परमायुः पालयित्वा कालमास कालं कृत्वा तृतीयायां पृथिव्यामुत्कृष्टसप्तसागरोपमस्थितिकेषु नैरयिकेषु नैरयिकतयोपपन्नः ।

कालं किच्चा तच्चाए पुढवीए उक्कोससत्तसागरोवमट्ठितीएसु णेरइएसु णेरइयत्ताए उववण्णे ॥ सू० (१७) से णं तओ अणंतरं उव्वट्टित्ता इहेव सालाडवीए चोरपल्लीए विजयस्स चोरसेणावइस्स खंदसिरीए भारियाए कुच्छिंसि पुत्तत्ताए उववण्णे। तते णं तीसे खंदसिरीए भारियाए अण्णया कयाति तिण्हं मासाणं बहुपडिपुण्णाणं इमे एयारूवे दोहले पाउब्भूते,—'धण्णाओ णं ताओ अम्मयाओ ४ जा णं बहूहिं मित्तणाइनियगसयणसंबंधिपरियणमहिलाहिं अण्णाहि य चोरमहिलाहिं सद्धिं संपरिवुडाण्हाया जाव० पायच्छित्ता सव्वालंकारभूसिता विउलं असणं पाणं खाइमं साइमं सुरं च ५ आसादेमाणा ४ विहरंति। जिमियभुत्तुत्तरागयाओ पुरिसनेवत्थिया सण्णद्ध० जाव पहरणावरणा भरिएहिं फलएहिं णिक्किट्ठाहिं

'जिमियभुत्तुत्तरागयाउ'त्ति जेमिताः—कृतभोजनाः, भुक्तोत्तरं-भोजनानन्तरमागता उचितस्थाने यास्तास्तथा। 'पुरिसनेव-

स ततोऽनन्तरमुद्वृत्त्येहैव शालाटव्यां चोरपल्ल्यां विजयस्य चोरसेनापतेः स्कन्दश्रियो भार्यायाः कुक्षौ पुत्रतयोपपन्नः। ततस्तस्याः स्कन्दश्रियो भार्याया अन्यदा कदाचित् त्रिषु मासेषु बहुपरिपूर्णेष्वयमेतद्रूपो दोहदः प्रादुर्भूतः,—'धन्यास्ता अम्बाः ४ या बहुभिर्मित्रज्ञातिनिजकस्वजनसबन्धिपरिजनमहिलाभिरन्याभिश्च चोरमहिलाभिः सार्धं संपरिवृताः स्नाता यावत्० प्रायश्चित्ताः सर्वालङ्कारभूषिता विपुलमशनं पानं खादिमं स्वादिमं सुरां च ५ आस्वादयमानाः ४ विहरन्ति। जिमितभुक्तोत्तरागताः पुरुषनेपथ्याः सन्नद्ध० यावत् प्रहर-

असीहिं अंसागतेहिं तोणेहिं सजीवेहिं धणूहिं, समुक्खित्तेहि सरेहिं समुल्लासियाहिं दामाहिं लंबियाहिं अवसारियाहिं ऊरुघंटाहिं, छिप्पतूरेणं वज्जमाणेणं महया उक्किट्ठ० जाव समुद्दरवभूयंपि व करेमाणीओ सालाडवीए चोरपल्लीए सव्वओ समंता ओलोएमाणीओ २ आहिंडेमाणीओ २ दो-

त्थिय'त्ति, कृतपुरुषनेपथ्याः 'सन्नद्ध' इत्यत्र यावत्करणादिदं दृश्यम्-'सन्नद्धबद्धवम्मियकवइया उप्पीलियसरासणपट्टिया पिणद्धगेविज्जा विमलवरचिंधपट्टा गहियाउहपहरणावरणा'त्ति,। व्याख्या तु प्रागिवेति। 'भरिएहिं'ति, हस्तपाशितैः 'फलएहिंति' स्फटिकैः 'निकिट्ठाहिं'ति, कोशकादाकृष्टैः 'असीहिं'ति, खङ्गैः 'अंसागएहि'ति स्कन्धदेशमागतैः पृष्ठदेशे बन्धनात्। 'तोणेहिं'ति, शरधिभिः 'सजीवेहिं'ति सजीवैः-कोट्यारोपितप्रत्यञ्चैः 'धणूहिं'ति कोदण्डकैः। समुक्खित्तेहिं सरेहिं'ति, निसर्गार्थमुत्क्षिप्तैर्बाणैः। 'समुल्लासियाहिं'ति, समुल्लासिताभिः 'दामाहिं'ति, पाशकविशेषैः, 'दाहाहिं' इति क्वचित्, तत्र प्रहरणविशेषैर्दीर्घवंशाग्रन्यस्तदात्ररूपैः। 'ओसारियाहिं'ति, प्रलम्बिताभिः 'ऊरुघंटाहिं'ति, जङ्घाघण्टिकाभिः 'छिप्पतूरेण वज्जमाणेणं द्रुततूर्येण वाद्यमानेन, 'महया उक्किट्ठि' इत्यत्र यावत्करणादिदं दृश्यम्-'महया उक्किट्ठसीहनायबोलकलकलरवेणं' तत्रोत्कृष्टश्चानन्दमहाध्वनिः, सिंहनादश्च-प्रसिद्धः, बोलश्च वर्णव्यक्तिवर्जितो ध्वनिरेव, कलकलश्च व्यक्तवचनः स एव, तल्लक्षणो यो रवः स तथा तेन 'समुद्दरवभूयंपि व'त्ति, जलधिशब्द-

णावरणा भृतैः फरकैः, निष्कृष्टैरसिभिः, अंसागतैणतूणैः, सजीवैर्धनुर्भिः समुत्क्षिप्तैः शरैः, समुल्लासिताभिर्दामभिः, लम्बिताभिरवसारिताभिरूरुघण्टाभिः, क्षिप्रतूरेण वाद्यमानेन महतोत्कृष्ट० यावत् समुद्ररवभूतमिव कुर्वत्यः शालाटव्यां चोरपल्ल्यां सर्वतः समन्तादवलोकयन्त्यः

हलं विणेंति, तं जइ णं अहंपि जाव विणिज्जामि' त्ति कट्टु तंसि दोहलंसि अविणिज्जमाणंसि जाव झियाति । तते णं से विजए चोरसेणावती खंदसिरिभारियं ओहत० जाव पासति, २ एवं वयासी,— 'किण्णं तुमं देवाणुं० ओहत० जाव झियासि ?', तते णं सा खंदसिरी विजयं एवं वयासी,—'एवं खलु देवाणु० मम तिण्हं मासाणं जाव ज्झियामि' तते णं से विजए चोरसेणावती खंदसिरीभारियाए अंतिते

प्राप्तमिव तन्मयमिवेत्यर्थः, 'गगनमण्डलम्' इति गम्यते । 'तं जइ अहंपि'त्ति तत् तस्मात्, यद्यहमपि, इह यावत्करणादिदं दृश्यम् बहूहिं मित्तनाइणियगसयणसंबंधिपरियणमहिलाहिं अन्नाहि य' इत्यादि, । दोहलं विणिज्जामीति दोहदं व्यपनयामि 'त्ति कट्टु', इति कृत्वा इति हेतोः । 'तंसि दोहलंसि'त्ति, तस्मिन् दोहदे, इह यावत्करणात् "अविणिज्जमाणंसि सुक्खा भुक्खा णिम्मंसा उलुग्गा इत्यादि, 'अट्टझाणोवगया झियाति' इत्येतदन्तं दृश्यमिति । 'ततो णं से', विजयश्चौरसेनापतिः स्कन्दश्रियं भार्यामुपहतमनसङ्कल्पां भूमिगतदृष्टिकामार्त्तध्यानोपगतां ध्यायन्तीं पश्यति, दृष्ट्वैवमवादीत्–'किं णं त्वं देवानुप्रिये ! उपहतमनःसङ्कल्पा' इत्यादि विशेषेण 'ध्यायसि' इतीदं वाक्यमनुसृत्य सूत्रं गमनीयम् ।

२ आहिण्डमानाः २ दोहदं विनयन्ति । तद् यद्यहमपि यावद् विनयामि' इति कृत्वा तस्मिन् दोहदेऽविनीयमाने यावद् ध्यायति । ततः स विजयश्चौरसेनापतिः स्कन्दश्रीभार्यामपहत० यावत् पश्यति, दृष्ट्वैवमवदत्,–'किं त्वं देवानुप्रिये ! अपहत० यावद् ध्यायसि ?' ततः सा स्कन्दश्रीर्विजयमेवमवादीत्,—' एवं खलु देवानु० मम त्रिषु मासेषु यावद् ध्यायामि ' । ततः स विजयश्चौरसेनापतिः स्कन्दश्रीभार्याया

एयमट्ठं सोच्चा निसम्म० खंदसिरिभारियं एवं वयासी,–'अहासुहं देवाणुप्पिए'त्ति एयमट्ठं पडिसुणेति । ततं णं सा खंदसिरीभारिया विजएणं चोरसेणावतिणा अब्भणुण्णाया समाणी हट्ठं० बहूहिं मित्त० जाव अण्णाहि य बहूहिं चोरमहिलाहिं सद्धिं संपरिवुडा ण्हाया जाव विभूसिता विपुलं असणं० ४ सुरं च ५ आसादेमाणी विहरति । जिमियभुत्तुत्तरागया पुरिसणेवत्थिया सण्णद्धबद्ध० जाव आहिंडमाणी डोहलं विणेति, तते णं सा खंदसिरिभारिया संपुण्णदोहला संमाणियदोहला विणीयदोहला वोच्छिण्णदोहला संपन्नदोहला तं गब्भं सुहं सुहेणं परिवहाति । तते णं सा खंदसिरी चोरसेणावतिणी णवण्हं मासाणं बहुपडिपुण्णाणं दारगं पयाता ।

---

अन्तिक एतमर्थं श्रुत्वा निशम्य स्कन्दश्रीभार्यामेवमवादीत्,—'यथासुखे देवानुप्रिये'' इत्येतमर्थं प्रतिशृणोति। ततः सा स्कन्दश्रीर्भार्या विजयेन चोरसेनापतिनाऽभ्यनुज्ञाता सती हृष्ट० बहुभिर्मित्र० यावदन्याभिश्च बहुभिश्चोरमहिलाभिः सार्धं सपरिवृता स्नाता यावद् विभूपिता विपुलमशन ४ सुरां च ५ आस्वादयन्ती ४ विहरति । जिमितभुक्तोत्तरागता पुरुषनेपथ्या सन्नद्धबद्ध० यावदाहिण्डमाना दोहदं विनयति । ततः सा स्कन्दश्रीभार्या सपूर्णदोहदा संमानीतदोहदा विनीतदोहदा व्युच्छिन्नदोहदा सपन्नदोहदा तं गर्भं सुखं सुखेन परिवहति । ततः सा स्कन्दश्रीश्चोरसेनापतिपत्नी नवसु मासेषु बहुपरिपूर्णेषु दारकं प्रजाता ।

वि पा क श्रु त म्

तते णं विजए चोरसेणावती तस्स दारगस्स महया इड्डिसक्कारसमुदएणं दसरत्तं ठिइवडियं करेति । तते णं से विजए चोरसेणावती तस्स दारगस्स एक्कारसमे दिवसे विपुलं असणं० ४ उवक्खडावेति, मित्तनाति० आमंतेति २ जाव तस्सेव मित्तनाति० पुरओ एवं वयासी—'जम्हा णं अम्हं इमंसि दारगंसि गब्भगयंसि समाणंसि इमे एयारूवे दोहले पाउब्भूते, तम्हा णं होउ अम्हं दारए अभग्गसेणे णामेणं । तते णं से अभग्गसेणे कुमारे पंचधाई० जाव परिवड्ढति । ( सू० १८ )

तते णं से अभग्गसेणकुमारे उम्मुक्कबालभावे यावि होत्था, अट्ठ दारियाओ जाव अट्ठओ दाओ

'इड्ढिसक्कारसमुदएणं'ति, ऋद्ध्या-वस्त्रसुवर्णादिसंपदा सत्कारः-पूजाविशेषस्तस्य समुदयः समुदायो यः स तथा तेन, 'दसरत्तं ठिइपडियं'ति, दशरात्रं यावत् स्थितिपतितं-कुलक्रमागतं पुत्रजन्मानुष्ठानं तत् तथा 'अट्ठ दारियाउ'त्ति, अस्यायमर्थः-'तए णं तस्स अभ-

ततो विजयश्चोरसेनापतिस्तस्य दारकस्य महता ऋद्धिसत्कारसमुदयेन दशरात्रं स्थितिपतितं करोति । ततः स विजयश्चोरसेनापतिस्तस्य दारकस्यैकादशे दिवसे विपुलमशनं ४ उपस्कारयति, मित्रज्ञाति० आमन्त्रयति, आमन्त्र्य यावत् तस्यैव मित्रज्ञाति० पुरत एवमवादीत्—'यस्मादस्माकमस्मिन् दारके गर्भगते सत्यमेतद्रूपो दोहदः प्रादुर्भूतः, तस्माद् भवत्वस्माकं दारकोऽभग्नसेनो नाम्ना । ततः सोऽभग्नसेनः कुमारः पञ्च धात्री० यावत् परिवर्धते । ततः सो ऽभग्नसेनकुमार उन्मुक्तबालभावोऽभवत् । अष्ट दारिका यावदष्टको दायो धवल०

उप्पिं० भुंजति । तते णं से विजए चोरसेणावती अण्णया कयाती कालधम्मुणा संजुत्ते । तते णं से अभग्गसेणे कुमारे पंचहिं चोरसतेहिं सद्धिं संपरिवुडे रोयमाणे कंदमाणे विलवमाणे विजयस्स चोर-सेणावइस्स महया इड्ढिसक्कारसमुदएणं णीहरणं करेति २ बहूइं लोइयाइं मयकिच्चाइं करोति २ केवइ

ग्गसेणकुमारस्स अम्मापियरो अभग्गसेणं कुमारं सोहणंसितिहिकरणनक्खत्तमुहुत्तंसि अट्ठहिं दारियाहिं सद्धिं एगदिवसेणं पाणिं गेण्हावेसु'त्ति यावत्करणाच्चेदं दृश्यम्–'तए णं तस्स अभग्गसेणकुमारस्स अम्मापियरो इमं एयारूवं पीइदाणं दलयंति' इति । 'अट्ठओ दाउ'त्ति, अष्ट परिमाणमस्येति अष्टको दायो दानं 'वाच्य,' इति शेषः, स चैवम्–'अट्ठ हिरण्णकोडीओ अट्ठ' सुवन्नकोडीओ इत्यादि यावद् अट्ठ पेसणकारियाउ, अन्नं च विपुलधणकणगरययमणिमोत्तियसंखसिलप्पवालरत्तरयणमाइयं संतसारसावएज्जं' इति । 'उप्पिं भुंजइ'त्ति, अस्यायमर्थः–"तए णं से अभग्गसेणे कुमारे उप्पिंपासायवरगए फुट्टमाणेहिं मुइंगमत्थएहिं वरतरुणीसंपउत्तेहिं बत्तीसइ-बद्धेहिं नाडएहिं उवगिज्जमाणे विउले माणुस्सए कामभोगे पच्चणुभवमाणे विहरइ' इति 'महत्थं'ति महाप्रयोजनम्। 'महग्घं'ति महा-(बहु)मूल्यम् । 'महरिहं'ति महतो योग्यमिति ।

---

भुङ्क्ते । ततः स विजयश्चोरसेनापतिरन्यदा कदाचित् कालधर्मेण सयुक्तः । ततो सोऽभग्नसेनः कुमारः पञ्चभिश्चोरशतैः सार्धं संपरिवृतो रुदन् क्रन्दन् विलपन् विजयस्य चोरसेनापतेर्महता ऋद्धिसत्कारसमुदयेन निस्सरणं करोति कृत्वा बहूनि लौकिकानि मृतकृत्यानि करोति,

कालेणं अप्पसोए जाते यावि होत्था, तते णं ताइं पंच चोरसयाइं अन्नया कयाती अभग्गसेणं कुमारं सालाडवीए चोरपल्लीए महया २ चोरसेणावइत्ताए अभिसिंचंति। तते णं से अभग्गसेणे कुमारे चोरसेणावती जाते अहम्मिए जाव कप्पायं गेण्हति। तते णं ते जाणवाया पुरिसा अभग्गसेणेण चोरसेणावतिणा बहुग्गामघायावणाहिं ताविया समाणा अण्णमण्णं सद्दावेंति, २ एवं वयासी-'एवं खलु देवाणु० अभग्गसेणे चोरसेणावती पुरिमतालस्स णगरस्स उत्तरिल्लं जणवयं बहूहिं गामघातेहिं जाव निद्धणे करेमाणे विहरति, तं सेयं खलु देवाणुप्पिया! पुरिमताले णगरे महब्बलस्स रण्णो एतमट्ठं विन्नवित्तते, तते णं ते जाणवयपुरिसा एतमट्ठं अण्णमण्णं पडिसुणेंति २ महत्थं महग्धं महरिहं रायरिहं

---

कृत्वा कियता कालेनाल्पशोको जातश्चाप्यभवत्। ततस्तानि पञ्च चोरशतान्यन्यदा कदाचिदभग्नसेनं कुमारं शालाटव्यां चोरपल्ल्यां महता २ चोरसेनापतितायामभिषिञ्चन्ति। ततः सोऽभग्नसेनः कुमारश्चोरसेनापतिर्जातोऽधार्मिको यावत् कल्पायं गृह्णाति।

ततस्ते जानपदाः पुरुषा अभग्नसेनेन चोरसेनापतिना बहुग्रामघातनाभिस्तापिताः सन्तोऽन्योन्यं शब्दाययन्ति २ एवमवदन्-'एवं खलु देवानु० अभग्नसेनश्चोरसेनापतिः पुरिमतालस्य नगरस्यौत्तराहं जनपदं बहुभिर्ग्रामघातैर्यावद् निर्धनान् कुर्वन् विहरति। ततः श्रेयः

पाहुडं गेण्हंति २ त्ता जेणेव पुरिमताले णगरे जेणेव महब्बले राया तेणेव उवागते २ महब्बलस्स रण्णो तं महत्थं जाव पाहुडं उवणेंति २ करयलअजलिं कट्टु महब्बलं रायं एवं वयासी, एवं खलु सामी ! सालाडवीए चोरपल्लीए अभग्गसेणे चोरसेणावती अम्हे बहूहिं गामघातेहि य जाव निद्धणे करेमाणे विहरति, तं इच्छामि णं सामी ! तुब्भं बाहुच्छायापरिग्गहिया निब्भया णिरुव्विग्गा सुहंसुहेणं परिवसित्तए त्ति कट्टु पादपडिया पंजलिउडा महब्बलं रायं एतमट्ठं विण्णवेंति । तते णं से महब्बले राया तेसिं जाणवयाणं पुरिसाणं अंतिए एयमट्ठं सोच्चा निसम्म आसुरुत्ते जाव मिसिमिसेमाणे तिवलियं भिउडिं निडाले साहट्टु दंडं सद्दावेति २ त्ता एवं वयासी;—गच्छह णं तुमं देवणुप्पिया ! सालाडविं

खलु देवानुप्रियाः ! पुरिमताले नगरे महाबलस्य राज्ञ एतमर्थं विज्ञपयितुम् '। ततस्ते जानपदपुरुषा एतमर्थमन्योन्यं प्रतिशृण्वन्ति २ महार्थं महार्घं महार्हं राजार्हं प्राभृतं गृह्णन्ति २ यत्रैव पुरिमतालं नगरं यत्रैव महाबलो राजा तत्रैवोपागताः २ महाबलाय राज्ञे तद् महार्थं यावत् प्राभृतमुपनयन्ति २ करतलाञ्जलिं कृत्वा महाबलराजानमेवमवदन्,—' एवं खलु स्वामिन् ! शालाटव्याश्चोरपल्ल्या अभग्नसेनश्चोरसेनापतिरस्मान् बहुभिर्ग्रामघातैश्च यावद् निर्धनान् कुर्वन् विहरति । तदिच्छामः स्वामिन् ! युष्माकं बाहुच्छायापरिगृहीता निर्भया निरुद्विग्नाः सुखसुखेन परिवस्तुम् ' इति कृत्वा पादपतिताः प्राञ्जलिपुटा महाबलं राजानमेनमर्थं विज्ञपयन्ति ।

ततः स महाबलो राजा तेषां जानपदानां पुरुषाणामन्तिक एतमर्थं श्रुत्वा निशम्याशुरुप्तो यावत् क्रुधा ज्वलंस्त्रिवलिकां भृकुटिं ललाटे संहृत्य

चोरपल्लिं विलुंपाहिं २ अभग्गसेणं चोरसेणावइं जीवग्गाहं गेण्हाहि २ मम उवणेहि, तते णं से दंडे ' तह ' त्ति विणएणं एयमट्ठं पडिसुणेति, तते णं से दंडे बहूहिं पुरिसेहिं सण्णद्ध० जाव पहरणेहिं सद्धिं संपरिवुडे मगइएहिं फलएहिं जाव छिप्पतूरेणं वज्जमाणेणं महया २ जाव उक्किट्ठिं० जाव करेमाणे पुरिमतालं णगरं मज्झंमज्झेणं निग्गच्छति २ त्ता जेणेव सालाडवी चोरपल्लीए तेणेव पहारेत्थगमणाए, तते णं तस्स अभग्गं० चोरसेणावइस्स चारपुरिसा इमीसे कहाए लद्धट्ठा समाणा जेणेव सालाडवी चोरपल्ली, जेणेव अभग्गसेणे चोरे, तेणेव उवागच्छंति २ करयल० जाव एवं वयासी;–' एवं खलु देवाणुप्पिया, पुरिमताले णगरे महब्बलेणं रण्णा महया भडचडगरेणं दंडे आणत्ते–' गच्छह णं तुमे देवाणु० साला-

---

दण्डं शब्दाययति २ एवमवादीत्,–' गच्छ त्वं देवानुप्रिय ! शालाटवीं चोरपल्लीं विलुम्प २ अभग्नसेनं चोरसेनापतिं जीवग्राहं गृहाण २ मह्यमुपनय'। ततः स दण्डः 'तथा' इति विनयेनैनमर्थं प्रतिशृणोति। ततः स दण्डो बहुभिः पुरुषैः सन्नद्ध० यावत्प्रहरणैः सार्धं सपरिवृतो भृतैः फलकैर्यावत् क्षिप्रतूरेण वाद्यमानेन महतोत्कृष्ट० यावत् कुर्वन् पुरिमतालान्नगराद् मध्येन निर्गच्छति येनैव शालाटवी चोरपल्ली तेनैव प्रहारेच्छुकमनाः। ततस्तस्याभग्नसेनस्य चोरसेनापतेश्चारपुरुषा अनया कथया लब्धार्थाः सन्तो यत्रैव शालाटवी चोरपल्ली, यत्रैवाभग्नसेनश्चोरस्तत्रैवोपागताः, उपागत्य करतल० यावदेवमवादिषुः;–'एवं खलु देवानुप्रिय ! पुरिमताले नगरे महाबलेन राज्ञा महता भटवृन्देन दण्ड आज्ञप्तः

डविं चोरपल्लिं विलुंपाहि २ अभग्गसेणं चोरसेणावतिं जीवग्गाहं गेण्हाहि २ त्ता ममं उवणेहि। ' तते
णं से दंडे महया भडचडगरेणं जेणेव सालाडवी चोरपल्ली तेणेव पहारेत्थगमणाए '।
ततेणं से अभग्गसेणे चोरसेणावती तेसिं चारपुरिसाणं अंतिए एयमट्ठं सोच्चा निसम्म पंच चोर-
सताइं सद्दावेति सद्दावेत्ता एवं वयासी;—'एवं खलु देवाणुप्पिया ! पुरिमताले णगरे महब्बले जाव ते-
णेव पहारेच्छगमणे ( ०णाए ) आगते'। तते णं से अभग्गसेणे ताइं पंच चोरसताइं एवं वयासी—
'तं सेयं खलु देवाणुप्पिया ! अम्हं तं दंडं सालाडविं चोरपल्लिं असंपत्तं अंतरा चेव, पडिसेहित्तए'। तते

'दंडं' ति, 'दण्डनायकम्। जीवग्गाहं गेण्हाहि' त्ति, जीवन्तं गृहाणेत्यर्थः। २ 'भडचडगरेणं' ति, योधवृन्देन। 'मगइएहिं'

'गच्छ त्वं देवानुप्रिय ! शालाटवीं चोरपल्लीं विलुम्प, अभग्नसेनं चोरसेनापतिं जीवग्राहं गृहाण, गृहीत्वा मह्यमुपनय'। ततः स दण्डो महता भटवृन्देन येनैव शालाटवी चोरपल्ली तेनैव प्रहारेच्छुकमनाः। ततः सोऽभग्नसेनश्चौरसेनापतिस्तेषां चारपुरुषाणामन्तिक एनमर्थं श्रुत्वा निशम्य पञ्च चोरशतानि शब्दयति। शब्दयित्वैवमवादीत्,—'एवं खलु देवानुप्रियाः ! पुरिमताले नगरे महाबलो यावत्तेनैव प्रहारेच्छुकमना आगतः'। ततः सोऽभग्नसेनस्तानि पञ्च चोरशतान्येवमवदत्,—'तत् श्रेयः खलु देवानुप्रियाः ! अस्माकं तं दण्डं शालाटवीं चोरपल्लीमसम्प्राप्तमन्तरैव प्रतिषेद्धुम्'। ततस्तानि पञ्च चोरशतान्यभग्नसेनस्य चोरस्य 'तथा' इति यावत् प्रतिशृण्वन्ति। ततः सोऽभग्नसेन-

णं ताइं पंच चोरसताइं अभग्गसेणस्स चोर(सेणावइ)स्स 'तह' त्ति जाव पडिसुणेंति, तते णं से अभग्गसेणे चोरसेणावती विपुलं असणं पाणं खाइमं साइमं उवक्खडावेति २ त्ता पंचहिं चोरसतेहिं सद्धिं ण्हाते जाव पायच्छित्ते भोयणमंडवंसि तं विपुलं असणं ४ सुरं ५ च आसाएमाणे ४ विहरति, जिमियभुत्तुत्तरागतेवि य णं समाणे आयंते चोक्खे परमसुइभूते पंचहिं चोरसतेहिं सद्धिं अल्लं चम्मं दुरूहति २ त्ता सण्णद्ध० जाव पहरणेहि मगइतेहिं जाव ०रवेणं पुव्वावरण्हकालसमयंसि सालाडवीओ चोरपल्लीओ णिग्गच्छति २ त्ता विसमदुग्गगहणं ठिते गहियभत्तपाणिए तं दंडं पडिवालेमाणे चिट्ठति। तते णं से दंडे जे-

ति, हस्तपाशितैर्यावत्करणात् 'फलएही' त्यादि दृश्यम्। 'विसमदुग्गगहणं' ति, विषमं निम्नोन्नति(न्नतं)भूमिकं दुर्गं-दुष्प्रवेशं गहनं-वृक्षगह्वरम्। 'संपलग्गे' त्ति, योद्धुं समारब्धः। 'हयमहिय' त्ति, यावत्करणादिदं दृश्यम्।-"हयमहियपवरवीरघाइयविवडिय-

श्चोरसेनापतिर्विपुलमशनं पान खादिमस्वादिमोपस्कारयति। उपस्कार्य पञ्चभिश्चोरशतैः सार्धं स्नातो यावत् ०प्रायश्चित्तो भोजनमण्डपे तं विपुलमशनं ४ सुरां च ५ आस्वादयन् विहरति। जिमितभुक्तोत्तरागतोऽपि च सन्नाचान्तश्चोक्षः परमशुचिभूतः पञ्चभिश्चोरशतैः सार्धमार्द्रं चर्म परिदधाति २ सन्नद्ध० यावत् ०प्रहरणो भूतैर्यावद्० रवेण पूर्वापराह्णसमये शालाटवीतश्चोरपल्लीतो निर्गच्छति २ विषमदुर्गगहने स्थितो गृहीतभक्तपानीयस्तं दण्डं प्रतीक्षमाणस्तिष्ठति। ततः स दण्डो यत्रैवाभग्नसेनश्चोरसेनापतिस्तत्रैवोपागच्छति, उपागत्याभग्नसेनेन

णेव अभग्गसेणे चोरसेणावती तेणेव उवागच्छति २ त्ता अभग्गसेणेणं चोरसेणावइणा सद्धिं संपलग्गे याविं होत्था, तते णं से अभग्गसेणे चोरसे० तं दंडं खिप्पामेव हयमहिय० जाव पडिसेहेति ।

तते णं से दंडे अभग्ग० चोरसे० हय० जाव पडिसेहिते समाणे अथामे अबले अवीरिए अपुरिसक्कारपरक्कमे अधारणिज्जमित्तिकट्टु जेणेव पुरिमताले णगरे जेणेव महब्बले राया तेणेव उवा० २ करयल० जाव एवं वयासी;—'एवं खलु सामी ! अभग्गसेणे चोरसे० विसमदुग्गगहणं ठिते गाहितभत्तपा-

विंधज्झयपडागं" हतः—सैन्यस्य हतत्वात्, मथितो-मानस्य मन्थनात्, प्रवरवीराः—सुभटा घातिता—विनाशिता यस्य स तथा, विपतिताश्चिह्नध्वजा गरुडादिचिह्नयुक्तकेतवः पताकाश्च यस्य स तथा; ततः पदचतुष्टयस्य कर्मधारयः, अतस्तम् । "दिसो दिसं विप्पडिसेहेति" त्ति सर्वतो रणाद् निवर्तयति। 'अथामे' त्ति तथाविधस्थामवर्जितः, 'अबले' त्ति, शारीरबलवर्जितः 'अवीरिए' त्ति, जीववीर्यरहितः । 'अपुरिसक्कारपरक्कमे' त्ति, पुरुषकारः-पौरुषाभिमानः, स एव निष्पादितस्वप्रयोजनः पराक्रमः, तयोर्निषेधादपुरुषकारपराक्रमः। 'अधारणिज्जमिति कट्टु' अधारणीयं धारयितुमशक्यं परबलं, स्थातुं वाऽशक्यमिति कृत्वा इति हेतोः। 'उरंउरेणं'

ततः स चोरसेनापतिना सार्धं सम्प्रलग्नश्चाप्यभवत् । ततः सोऽभग्नसेनश्चोरसेनापतिस्तं दण्डं क्षिप्रमेव हतमथित० यावत् प्रतिषेधति । ततः स दण्डोऽभग्नसेनेन चोरसेनापतिना हत० यावत् प्रतिषिद्ध. सन्नस्थामाऽबलोऽवीर्योऽपुरुषकारपराक्रमोऽधारणीयमिति कृत्वा यत्रैव पुरिमतालं नगर यत्रैव महाबलो राजा तत्रैवोपागच्छति, उपागत्य करतल० यावदेवमवादीत्,—' एव खलु स्वामिन् ! अभग्नसेनश्चोरसेना-

णिए नो खलु से सक्का केणइ सुबहुएणावि आसबलेण वा हत्थिबलेण वा जोहबलेण वा रहबलेण वा चाउरंगेणंपि उरंउरेणं गेण्हित्तते' ताहे सामेण य भेदेण य उवप्पदाणेण य वीसंभमाणेउं पयत्ते यावि होत्था, जेवि य से अब्भिंतरगा सीसगभमा मित्तनातिनियगसयणसंबंधिपरियणं च विपुलेणं धणकण-गरयणसंतसारसावतेज्जेणं भिंदति, अभग्गसेणस्स य चोरसे० अभिक्खणं २ महत्थाइं महग्घाइं महरि-हाइं रायारिहाइं पाहुडाइं पेसेति। अभग्गसेणं च चोरसे० वीसंभमाणेइ ॥ ( सू० १९ )

ति साक्षादित्यर्थः । 'सामेण य' त्ति साम प्रेमोत्पादकं वचनम् । 'भेदेण य' त्ति भेदः स्वामिनः पदातिषु, पदातीनां च स्वामि-न्यविश्वासोत्पादनम् । 'उवप्पयाणेण य' त्ति उपप्रदानमभिमतार्थदानम् । 'जेवि य से अब्भिंतरगा सीसगभम' त्ति येऽपि च 'से' तस्याभ्रसेनस्याभ्यन्तरका—आसन्ना मन्त्रिप्रभृतयः, किंभूताः ?—'सीसगभम' त्ति, शिष्या एव शिष्यकास्तेषां भ्रमो—भ्रान्तिर्येषु ते शिष्यभ्रमा विनीततया शिष्यतुल्या इत्यर्थः, अथवा, शीर्षकं शिर एव शिरः कवचं वा तस्य भ्रमोऽव्यभिचारितया शरीररक्षकत्वेन वा ते शीर्षकभ्रमाः, । इह 'तान्' इति शेषः । 'भिनत्ति' इति च योगः, तथा 'मित्तनाइनिअग' इत्यादि प्राग्वत् । 'भिंदइ'

पतिर्विषमदुर्गगहने स्थितो गृहीतभक्तपानीयो नो खलु शक्यः केनचित् सुबहुनाप्यश्वबलेन वा हस्तिबलेन वा योधबलेन वा रथबलेन वा चतुरङ्गेणापि साक्षाद् ग्रहीतुम्' तदा साम्ना च भेदेन चोपप्रदानेन च विश्रम्भमानेतुं प्रवृत्तश्चाप्यभवत् । येऽपि च तस्याभ्यन्तरकाः शिष्यभ्रमाः, मित्रज्ञातिनिजकस्वजनसंबन्धिपरिजन च विपुलेन धनकनकरत्नसत्सारस्वापतेयेन भिनत्ति । अभग्नसेनस्य च चोरसेनापतेर-

तते णं से महब्बले राया अण्णया कयाति पुरिमताले णगरे एगं महं महतिमहालियं कूडागारसालं करेति अणेगखंभसतसंनिविट्ठं पासाइयं ४। तते णं से महब्बले राया अण्णया कयाति पुरिमताले नगरे उस्सुकं जाव दसरत्तं पमोयं उग्घोसावेति २ त्ता, कोडुंबियपुरिसे सद्दावेति २ एवं वयासी;—

त्ति, चौरसेनापतौ स्नेहं भिनत्ति, आत्मनि प्रतिबद्धान् करोतीत्यर्थः। 'महत्थाइं' ति, महाप्रयोजनानि 'महग्घाइं' ति महामूल्यानि। 'महरिहाइं ति महतां योग्यानि महं वा—पूजामर्हन्ति, महान् वाऽर्हः-पूजा येषां तानि तथा, एवंविधानि च कानिचित् केषांचिद् योग्यानि भवन्तीत्यत आह—' 'रायारिहाइंति, राज्ञामुचितानि ॥ 'महं महतिमहालियं कूडागारसालं' ति, महतीं—प्रशस्ताम्, महती चासौ अतिमहालिका च—गुर्वी महातीमहालिका ताम्, अत्यन्तगुरुकामित्यर्थः, 'कुडागारसालं' ति कूटस्येव पर्वतशिखरस्येवाकारो यस्याः सा तथा, सा चासौ शाला चेति समासः, अतस्ताम्।' अणेगखंभसयसंनिविट्ठं पासाइयं दरिसणिज्जं अभिरूवं पडिरूवंति, व्याख्या प्राग्वत्। 'उस्सुकं अविद्यमानशुल्कग्रहणं, यावत्करणादिदं दृश्यम्—'उक्करं' क्षेत्रगवादि प्रति अविद्यमानराजदेयद्रव्यम्, 'अभडप्पवेसं' कौटुम्बिकगेहेषु राजवर्णवतां भटानामविद्यमानप्रवेशम्, 'अडंडिमकुडंडिमं' दण्डो निग्रहस्तेन निर्वृत्तं राजदेयतया व्यवस्थापितं दण्डिमम्, कुदण्डोऽसम्यग् निग्रहस्तेन निर्वृत्तं द्रव्यं कुदण्डिमं, ते अविद्यमाने यत्र प्रमोदेऽसाव-

भीक्ष्ण महार्थानि महार्घाणि महार्हाणि राजार्हाणि प्राभृतानि प्रेषयति। अभग्नसेनं च चोरसेनापतिं विश्रम्भमानयति। ततः स महाबलो राजाऽन्यदा कदाचित् पुरिमताले नगर एकां महतीं महातिमहालिकां कूटागारशालां करोत्यनेकस्तम्भशतसनिविष्टां प्रासादीयां ४। तत

'गच्छह णं तुब्भे देवाणु० सालाडवीए चोरपल्लीए तत्थ णं तुब्भे (म्हे) अभग्गसेणं चोरसे० करयल० जाव एवं वयह,–'एवं खलु देवा० पुरिमताले णगरे महब्बलस्स रण्णो उस्सुके जाव दसरत्ते पमोदे उग्घोसिते (सेति)। तं किण्णं देवाणु० विउलं असणं ४ पुप्फवत्थगंधमल्लालंकारे (रं) य इहं हव्वमाणिज्जउ, उयाहु सयमेव गच्छिज्जा'। तते णं कोडुंबियपुरिसा महब्बलस्स रण्णो कर० जाव पुरिमतालाओ णगराओ पडि० २ णातिविकट्ठहिं अद्धाणेहिं सुहेहिं वसाहिपायरासेहिं जेणेव सालाडवी चोरपल्ली तेणेव उवा० अभग्ग-

दण्डिमकुदण्डिमोऽतस्तम्, 'अधरिमं' ति अविद्यमानं धरिमं–ऋ(त्रा)णद्रव्यं यत्र स तथा तम्; 'अधारणिज्जं' अविद्यमानाधमर्णम्; 'अणुद्धूयमुयंगं' अनुद्धूता–आनुरूप्येण वादनार्थमुत्क्षिप्ताः, अनुद्धूता वा–वादनार्थमेव वादकैरत्यक्ता मृदङ्गा यत्र स तथा तम्; 'अमिलायमल्लदामं' अम्लानपुष्पमालम्, 'गणिकावरनाडइज्जकलियं' गणिकावरैर्नाटकीयैर्नाटकपात्रैः कलितो यः स तथा तम् 'अनेगतालाचराणुचरियं' अनेकैः प्रेक्षाकारिभिरासेवितमित्यर्थः-'पमुइयपक्कीलियाभिरामं' प्रमुदितैश्च प्रक्रीडितैश्च जनैरभिरमणीयम्, 'जहारिहं' ति, यथायोग्यम्। 'उदाहु सयमेव गच्छिज्जा' उताहो स्वयमेव गमिष्यसीत्यर्थः, 'णाइविगिट्ठेतिं' ति अनत्यन्तदीर्घैः 'अद्धाणेहिं' ति

स महाबलो राजाऽन्यदा कदाचित् पुरिमताले नगरे उच्छुल्कं यावद् दशरात्रं प्रमोदमुद्घोषयति २ कौटुम्बिकपुरुषान् शब्दयति २ एवमवादीत्,–' गच्छत यूयं देवानुप्रियाः ! शालाटव्यां चोरपल्ल्यां, तत्र यूयमभग्नसेनं चोरसेनापतिं करतल० यावदेवं वदत;–' एवं खलु देवानुप्रिय ! पुरिमताले नगरे महाबलेन राज्ञोच्छुल्को यावद् दशरात्रः प्रमोद उद्घोषितः तत् किं देवानुप्रिय ! विपुलमशनं ४ पुष्प-

सेणं चोरसेणावतिं करयल० जाव एवं वयासी,–एवं खलु देवाणु० पुरिमताले णगरे महब्बलस्स रण्णो उस्सुके जाव उदाहु सयमेव गाच्छिज्जा ?,' तते णं से अभग्ग० चोरसे० ते कोडुंबियपुरिसे एवं वयासी– 'अहण्णं देवाणु० पुरिमतालं णगरं सयमेव गच्छामि'। ते कोडुंबियपुरिसे सक्कारेति, पडिविसज्जेति ।

तते णं से अभग्गसेणे चोरसे० बहूहिं मित्त० जाव परिवुडे ण्हाते जाव पायच्छित्ते सव्वालंकार-भूसिते सालाडवीओ चोरपल्लीओ पडिनिक्खमति २ त्ता जेणेव पुरिमताले णगरे जेणेव महब्बले राया तेणेव उवा० २ त्ता करयल० महब्बलं रायं जएणं विजएणं वद्धावेति, वद्धावेत्ता महत्थं जाव पाहुडं उवणेति।

प्रयाणकैः । 'सुहेहिति' सुखैः सुखहेतुभिः । 'वसहिपायरासेहिं' ति, वास(शि)कप्रातर्भोजनैः 'जएणं विजएणं वद्धावेइ' त्ति जयेन

वस्त्रगन्धमाल्यालङ्कार चेह शीघ्रमानीयताम्, उताहो स्वयमेव गमिष्यथ। ततः कौटुम्बिकपुरुषा महाबलस्य राज्ञः कर० यावत् पुरिमतालाद् नगरात् प्रतिनिष्क्रामन्ति २ नातिविकृष्टैः प्रयाणैः सुखैर्वासकप्रातराशैर्यत्रैव शालाटवी चोरपल्ली तत्रैवोपागता अभग्नसेनं चोरसेनापतिं कर-तल० यावदेवमवादिषुः,–' एव खलु देवानुप्रिय ! पुरिमताले नगरे महाबलेन राज्ञोच्छुल्को यावद् उताहो स्वयमेव गमिष्यथ ? ततः सोऽभग्नसेनश्चोरसेनापतिस्तान् कौटुम्बिकपुरुषानेवमवदत्,–' अहं देवानुप्रियाः ! पुरिमतालं नगरं स्वयमेव गच्छामि '। तान् कौटु-म्बिकपूरुषान् सत्कारयति, प्रतिविसृजति । ततः सोऽभग्नसेनश्चोरसेनापतिर्बहुभिर्मित्र० यावत् परिवृतः स्नातो यावत् ०प्रायश्चित्तः सर्वालङ्कारभूषितः शालाटवीतश्चोरपल्लीतः प्रतिनिष्कामति २ यत्रैव पूरिमतालं नगर यत्रैव महाबलो राजा तत्रैवोपागच्छति करतल०

तते णं से महब्बले राया अभग्गसेणस्स चोरसे० तं महत्थं जाव पडिच्छाति। अभग्गसेणं चोरं (चोरसेणावतिं) सक्कारेति २ संमाणेति २ (पडि) विसज्जेति। कूडागारसेलं च से आवसहं दलयति। तते णं से अभग्गसेणे चोरसेणावती महब्बलेणं रण्णा विसज्जिते समाणे जेणेव कूडागारसाला तेणेव उवागच्छाति २त्ता। तते णं से महब्बले राया कोडुंबियपुरिसे सद्दावेति २त्ता एवं वयासी;—'गच्छह णं तुब्भे देवाणु० विउलं असणं ४ उवक्खडावेह २ तं विउलं असणं ४ सुरं च ५ सुबहुं पुप्फवत्थगंधमल्लालंकारं च अभग्गसेणस्स चोरसे० कूडागारसालाए उवणेह'। तते णं ते कोडुंबियपुरिसा करयल० जाव उवणेंति। तते णं से अभग्गसेणे चोरसेणावई बहूहिं मित्त० सद्धिं संपरिवुडे ण्हाते जाव सव्वालंकाराविभूसिते तं

---

महावलं राजान जयेन विजयेन वर्धयति, वर्धयित्वा महार्थं यावत् प्राभृतमुपनयति। ततः स महावलो राजाऽभग्नसेनस्य चोरसेनापतेस्तद् महार्थं यावत् प्रतीच्छति। अभग्नसेनं चोर सत्कारयति २ समानयति २ (प्रति) विसृजति। कूटागारशालां च तस्यावसथं दापयति। ततः सोऽभग्नसेनश्चोरसेनापतिर्महावलेन राज्ञा विसर्जितः सन् यत्रैव कूटागारशाला तत्रैवोपागच्छति २। ततः स महावलो राजा कौटुम्बिकपुरुषान् शब्दयति २ एवमवादीत्,—' गच्छत यूयं देवानुप्रियाः! विपुलमशनं ४ उपस्कारयत २ तद् विपुलमशनं ४ सुरां च ५ सुवहु पुष्पवस्त्रगन्धमाल्यालङ्कार चाभग्नसेनस्य चोरसे० कूटागारशालायामुपनयत'। ततस्ते कौटुम्बिकपुरुषाः करतल० यावदुपनयन्ति। तत सोऽभग्नसेनश्चोरसेनापतिर्बहुभिर्मित्र० सार्धं सपरिवृतः स्नातो यावत् सर्वालंकारविभूषितस्तद् विपूलमशनं ४ सुरां ५

विउलं असणं ४ सुरं च ५ आसाए० ४ पमत्ते विहराति ।

ततेणं से महब्बले राया कोडुंबियपुरिसे सद्दावेति २ एवं वयासी;—'गच्छह णं तुब्भे देवाणु० पुरिमतालस्स णगरस्स दुवाराइं पिधेह २ अभग्गसेणं चोरसेणा० जीवग्गाहं गेण्हह २ ममं उवणेह'। तते णं ते कोडुंबिया० करयल० जाव पडिसुणोंति २ पुरिमतालस्स नगरस्स दुवाराइं पिहेंति । अभग्गसेणं चोरसे० जीवग्गाहं गेण्हांति । महब्बलस्स रण्णो उवणेंति । तते णं से महब्बले राया अभग्गसेणं चोरसे० एतेणं विहाणेणं वज्झं आणवेति । एवं खलु गोतमा ! अभग्गसेणे चोरसेणावती पुरा जाव विहराति।

---

च आस्वादयन् ४ प्रमत्तो विहरति ।

ततः स महाबलो राजा कौटुम्बिकपुरुषान् शब्दयति २ एवमवादीत्,—'गच्छत यूय देवानुप्रियाः ! पुरिमतालस्य नगरस्य द्वाराणि पिधत्त २ अभग्नसेनं चोरसेनापतिं जीवग्राह गृह्णीत मह्यमुपनयत'। ततस्ते कौटुम्बिकाः० करतल० यावत् प्रतिशृण्वन्ति २ पुरिमतालस्य नगरस्य द्वाराणि पिदधति । अभग्नसेन चोरसेनापतिं जीवग्राहं गृह्णन्ति । महाबलाय राज्ञ उपनयन्ति । ततः स महाबलो राजाऽभग्नसेनं चोरसेनापतिमेतेन विधानेन वध्यमाज्ञापयति । एवं खलु गौतम ! अभग्नसेनश्चोरसेनापतिः पुरा यावद् विहरति ।'

'अभग्नसेनो भदन्त ! चोरसेनापतिः कालं कृत्वा कुत्र गमिष्यति ? कुत्रोपपत्स्यते ?' गौतम ! अभग्नसेनश्चोरसेनापतिः सप्तत्रिंशतं

'अभग्गसेणे णं भंते! चोरसेणावती कालमासे कालं किच्चा कहिं गच्छिहिइ? कहिं उववज्जिहिति?' गोतमा! अभग्गसेणे चोरसे० सत्ततीसं वासाइं परमाउयंती पालइत्ता अज्जेव तिभागावसेसे दिवसे सूल भिण्णे कते समाणे कालगते इमीसे रयणप्पभाए पुढवीए उक्कोसे० नेरइएसु उववज्जिहिति। से णं ततो अणंतरं उव्वट्टित्ता, एवं संसारो जहा पढमे जाव पुठवी। ततो उव्वट्टित्ता वाणारसीए णगरीए सूयरत्ताए

विजयेन च रिपूणां वर्धस्वेत्येवमाशिषं प्रयुङ्क्ते इत्यर्थः। ननु तीर्थकरा यत्र विहरन्ति तत्र देशे पञ्चविंशतेर्योजनानाम्, आदेशान्तरेण द्वादशानां मध्ये तीर्थकरातिशयाद् न वैरादयोऽनर्था भवन्ति, यदाह;—"पुव्वुप्पन्ना रोगा पसमति ईइ–वइर–मारीओ। अइवुट्ठि–अणावुट्ठि–न होइ दुब्भिक्खडमरं च" (पूर्वोत्पन्ना रोगाः प्रशाम्यन्ति इति वैरमार्यः। अतिवृष्टिरनावृष्टिर्न भवति दुर्भिक्षं डमरं च)॥१॥ इति; तत् कथं श्रीमन्महावीरे भगवति पुरिमताले नगरे व्यवस्थित एवाभग्नसेनस्य पूर्ववर्णितो व्यतिकरः संपन्न इति ?। अत्रोच्यते–सर्वमिदमर्थानर्थजातं प्राणिनां स्वकृतकर्मणः सकाशादुपजायते, कर्म च द्वेधा–सोपक्रमं निरुपक्रमं च; तत्र यानि वैरादीनि सोपक्रमकर्मसंपाद्यानि तान्येव जिनातिशयादुपशाम्यन्ति, सदौषधात् साध्यव्याधिवत्; यानि तु निरुपक्रमकर्म-

वर्षाणि परमायुः पालयित्वाऽद्यैव त्रिभागावशेषे दिवसे शूलभिन्नः कृतः सन् कालगतोऽस्यां रत्नप्रभाया पृथिव्यामुत्कर्षेण० नैरयिकेषूपपत्स्यते। स ततोऽन्तरमुद्वृत्त्य, एवं ससारो यथा प्रथमो यावत् पृथिवी। तत उद्वृत्त्य वाराणस्यां नगर्यां शूकरतया प्रत्यायास्यति। स तत्र शौकरिकैर्जीविताद् व्यपरोपित. सस्तत्रैव वाराणस्यां नगर्यां श्रेष्ठिकुले पुत्रतया प्रत्यायास्यति। स तत्रोन्मुक्तबालभावः, एवं यथा प्रथमः,

पच्चायाहिति । से णं तत्थ सोयरिएहिं जीवियाउ ववरोविए समाणे तत्थेव वाणारसीए णगरीए सोट्टिकुलंसि पुत्तत्ताए पच्चायाहिति, से णं तत्थ उम्मुक्कबालभावे, एवं जहा पढमे, जाव अंतं काहित्ति। निक्खेवो ।सू० २०॥

॥ ततियं अज्झयणं समत्तं ॥

## ॥ अथ चतुर्थं शकटाख्यमध्ययनम् ॥

'जति णं भंते !०' चउत्थस्स उक्खेवो, एवं खलु जम्बू ! तेणं कालेणं तेणं समएणं साहंजणी णामं णगरी होत्था रिद्धत्थिमिय०, तीसे णं साहंजणीए णयरीए बहिया उत्तरपुरत्थिमे दिसीभाए देव-

---

संपाद्यानि तान्यवश्यं विपाकतो वेद्यानि, नोपक्रमकारणविषयाणि, असाध्यव्याधिवत् । अत एव सर्वातिशयसंपत्समन्वितानां जिनानामप्यनुपशान्तवैरभावा गोशालकादय उपसर्गान् विहितवन्तः । ॥ इति विपाकश्रुते अभग्नसेनाख्यतृतीयाध्ययनविवरणम्॥

अथ चतुर्थे किञ्चिल्लिख्यते । ' जइ णं भंते ! चउत्थस्स उक्खेवउ त्ति, ' जइ णं भंते ' इत्यादि चतुर्थाध्ययनस्योपक्षेपकः

---

यावदन्तं करिष्यतीति निक्षेपः । ॥ तृतीयमध्ययनं समाप्तम् ॥

'यदि भदन्त !०' चतुर्थस्योत्क्षेपः। एवं खलु जम्बो ! तस्मिन् काले तस्मिन् समये साभाञ्जनी नाम नगर्यभवद् ऋद्धस्तिमित० । तस्याः साभाञ्जन्या नगर्या बहिरुत्तरपौरस्त्ये दिग्भागे देवरमण नामोद्यानमभवत् । तत्रामोघस्य यक्षस्य यक्षायतनमभूत् पुराणम् । तत्र साभाञ्जन्या

